कर्मसाधनेति । (कै)

तत्र हि सरूपाणां सम्बन्धीशिष्यत इत्यर्थः । तं चाचिन्नसम्बन्धिपदे आक्षेपकसामानाधिकरण्याय एकवचनान्ते एकत्वविवक्षेति भावः ॥ संख्येयार्थकत्वे द्विबहुवचनानुपपत्तिः । संख्यार्थत्वेऽर्थाऽसङ्गतिरत आह

द्वित्वेति ॥ (कै)

"द्विबह्वोरि"ति विषयसप्तमीति भावः ॥ शेषशब्दोऽत्र नोपयुक्तादन्यस्मिन् असम्भवात् तदाह

तत्र भावेति ॥ (कै)

व्याप्तीति । (कै)

अत्र शास्त्रे "[1]आद्युदात्तश्च" इत्यादिग्रहणेन "[2]शायीश्वरादिति रेफोच्चारणेन प्राथम्यन्यायापेक्षया व्याप्तिन्यायस्य प्राबल्यबोधनात् ।

---

१ अ ३ । पा १ । सू ३ ॥ २ अ १ । पा ४ । सू ५६ ॥

---

काश्यपप्रतिकृतयः काश्यपा इति ( ४ । १ । १०४ ॥ ५ । ३ । ९६, ९९ ) ॥ एकविभक्ताविति किमर्थम् । पयः पयो जरयति । वासो वासश्छादयति । ब्राह्मणाभ्यां च कृतं ब्राह्मणाभ्यां च देहीति ॥ किमर्थं पुनरिदमुच्यते । प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम् । वा ॥ प्रत्यर्थं शब्दा अभिनिवि-

---

मित्याह श्रुतौ चेति । भा । श्रोत्रोपलब्धावित्यर्थः । अथवा श्रोत्रेन्द्रियं श्रुतिरुच्यते । एकग्रहणमिति । भा । शेषणं शेष इति भावसाधनपक्षे प्राथम्यादेकस्यैव शेषो स्थिष्यति । शिष्यत इति शेष इति कर्मसाधनपक्षेऽप्येकत्व-

---

श्रयापि तत्त्वेणानेकार्थताभ्युपगम्यते । एवमपि सर्वत्र तत्त्वेनैव बोधनीयमपि नियमाभावात् पाक्षिको द्वन्द्वो दुर्वारः । आरब्धे त्वेकशेषे सुबन्तद्वयविरहात्

एवं चेतरनिवृत्तिमदवस्थानं तदर्थः। तत्र यद्यपि स्थितेः सिद्धत्वात् निवृत्तावेवार्थतो विधेयता तथापि शब्दतस्तस्यैव विधेयत्वाच्छाब्दि- न्यायेन द्विबहूनामेवावस्थानस्य निवृत्तिरिति भावः॥

संस्कार्य्यत्वादिति। (कै)

शिष्यमाणत्वविधानेन शेषपदार्थाक्षिप्तस्य संस्क्रियमाणत्वादिति भावः॥

सरूपाणामिति। (भा)

षष्ठ्याविधेयबोधकशेषपदेन सामानाधिकरण्यान्वययोग्यः सम्बन्धी आक्षिप्यते स चैकवचनान्त एव यद्यपि तथापि तस्य विधेयेन शिष्य- माणत्वेन संस्क्रियमाणत्वेनानुवाद्यत्वादेकत्वाविवक्षेति तात्पर्य्यम्॥

सरूपाणामिति। (कै)

लक्ष्यानुसारतो व्याख्यानमाश्रित्यैषा निर्धारणे षष्ठी साध्वनु-

---

शब्दे। किमिदं प्रत्यर्थमिति। अर्थमर्थं प्रति प्रत्यर्थम्। प्रत्यर्थं शब्दनिवे- शादेतस्मात् कारणान्नैकेन शब्देनानेकस्यार्थस्याभिधानं प्राप्नोति॥ तत्र को दोषः। तत्रानेकार्थाभिधानेऽनेकशब्दत्वम्। वा॥ तत्रानेकार्थाभिधाने- ऽनेकशब्दत्वं प्राप्नोति। इष्यते चैकेनाप्यनेकस्याभिधानं स्यादिति तत्रान्त-

---

संख्याया विवक्षितत्वादेक एवावशिष्यत इति प्रश्नः॥ द्विबह्वोरिति। भा। द्वित्वबहुत्वविषयस्यानेकस्य शब्दस्येत्यर्थः। तत्र भावसाधनपक्षे व्याप्तिन्याया- श्रयेणानेकस्यापि शेषः स्यात्। कर्मसाधनपक्षेऽपि संस्कार्य्यत्वात् प्राधान्यात्

---

द्वन्द्वस्याप्राप्तिरेव फलिता भवति। अत एव एकशेषस्य द्वन्द्वापवादकतेत्यु- क्तोषः। "इको गुणवृद्धी" (१। १। ३) इत्यस्य "अलोऽन्त्य" (१। १। ५२)

आवश्यकत्वाच्च साधुरित्याद्यध्याहारः । एवं च तेषां मध्ये एकस्य साधुत्वेऽपरस्यासाधुत्वेनार्थान्निवृत्तिरिति भावः ॥

षष्ठीति । (कै)

निर्दिश्यमानस्यादेशा इत्यर्थमावश्यकस्य व्याख्यानापेक्षा गौरवपरिहाराय नियमार्थत्वमप्यङ्गीकार्य्यमिति निर्धारणे षष्ठी न युक्तेति भावः ॥

अन्तरतम इति । (कै)

शब्दतोऽर्थतश्चेति आदिः तमब्ग्रहणादिति भावः ॥ अनुदात्तशब्दस्य बहुव्रीहित्वे मतुप् न स्यात् उक्तार्थत्वात् कर्मधारयात् तु मत्वर्थीयो नेष्ट इत्यत आह

---

देव यत्नं न सिध्यति । तस्मादेकशेषः । वा ॥ एवमर्थमिदमुच्यते ॥ अस्ति प्रयोजनमेतत् । किं तर्हीति । किमिदं प्रत्यर्थं शब्दा अभिनिविशन्त इत्येतं दृष्टान्तमाश्रित्य सरूपाणामेकशेष आरभ्यते न पुनरप्रत्यर्थं शब्दा अभिनिविशन्त इत्येतं दृष्टान्तमाश्रित्य विरूपाणामनेकशेष आरभ्यते । तत्रैतत् स्याल्लघीयसी सरूपनिवृत्तिर्गरीयसी विरूपप्रतिपत्तिरिति । तच्च न । लघीयसी विरूपप्रतिपत्तिः । किं कारणम् । यत्र हि बहूनां सरूपाणामेकः

---

संख्याया अविवक्षा स्यात् । यथा ग्रहं संमार्ष्टीति भावः ॥ शेषग्रहणमिति । भा । सरूपाणामेकः साधुर्भवतीति वाक्यशेषोऽध्याहरिष्यत इति भावः । आदेशोऽयमिति । भा । "षष्ठीस्थानेयोगे"ति नियमात् । तत्र को दोष इति । भा । अन्तरतम एक आदेशः प्रवर्त्स्यत इति भावः ॥ इतरथा सर्वे

---

अपवादकतेति पक्षेऽपवादशब्दस्य इत्थमेव व्याख्यातत्वात् । अत एव घटौ घटा इत्यादीन्यपीहोदाहरणानि । तत्रापि ऐच्छिकस्यानेकव्यक्तिबोधोद्देश-

द्वाविति। (कै)

अचोदात्तशब्दो धर्मिपरः॥ आदेशस्यापि तथात्वे एकशेषा-नर्थक्यमत आह

आदेशोऽपीति। (कै)

अचोदात्तशब्दधर्मपर इति भावः। विधीयमानानेकोदात्तस्य "उभे वनस्पत्यादिषु युगपद्" (६। २। १४०) इत्यादौ समा-वेशदर्शनादिति तात्पर्य्यम्॥

तेनेति। (कै)

पर्य्यायेणेति भावः॥ ननु शब्दे श्रूयमाणोदात्तानुदात्तयोरनु-ग्रहायान्तरतमपरिभाषयोभयस्वरक एवादेशो भविष्यतीति चेन्न। तेनैव रूपेण सादृश्यग्रहणमित्यत्र नियामकाभावेन पर्य्यायस्य दुर्वारत्वात्। यत्तु इन्द्र इन्द्र इत्येकशेषे एक आदेशोऽस्वरूपत्वादन्यस्य

---

शिष्यते तत्रावरतो द्वयोः सरूपयोर्निवृत्तिर्वक्तव्या। स्यात्। एवमप्येतस्मिन् सति किञ्चिदाचार्य्यः सुकरतरकं मन्यते सुकरतरकं चैकशेषारम्भं मन्यते॥ किं पुनरयमेकविभक्तावेकशेषो भवति। एवं भवितुमर्हति। एकविभक्ता-विति चेन्नाभावाद्विभक्तेः। वा॥ एकविभक्ताविति चेत्तन्न। किं कारणम्। अभावाद्विभक्तेः। न हि समुदायात् परा विभक्तिरस्ति। किं कारणम्।

---

दोषमाह। अन्यस्याश्चेति। भा॥ द्व्युदात्तवत इति। भा। द्वावुदात्तवन्ताव-च्शब्दौ यस्य समुदायस्य स द्व्युदात्तवान् समुदायः। आदेशोऽपि द्वावुदात्त-वन्तावुदात्तगुणयुक्तावकारौ यस्येति द्व्युदात्तवानुच्यते। एतच्चोपलक्षणं तेन

---

कस्यानेकविशकलितशब्दप्रयोगस्य घटोऽयं घटोऽयमिति बहुशो दर्शनेन तदैव सह विवक्षायां घटाविव्यादिद्वन्द्वस्य दुर्वारत्वात्। एतेन यथैषु प्र

स्यात् । सूत्रं तु अनेकाल्सु चरितार्थं ततः सवर्णदीर्घे "[1]दीर्घाद्" इति पूर्वसवर्णदीर्घनिषेधे यणियाविति स्यादित्याहुः ॥ तत्र "सरूपाणामि"ति बहुवचनेन प्रत्येकं स्थानिवत्त्वबोधनेन रमागमन्यायेन सर्वनिवृत्तेरदोषात् ॥ "लोप्यलोपि" पदयोः पौनरुक्त्यमाशङ्क्याह

## लोपनीयस्येति । (कै)

लोपपदम् "[2]यस्कलोरिति" ण्यदन्तम् ॥

## सम्बन्ध इति । (कै)

कृत्तद्धितसमासेभ्यो भावप्रत्ययस्य सम्बन्धाभिधायकत्वादिति भावः ॥

## एकैवेति । (कै)

गर्गस्यापत्यानीति विवक्षणादिति भावः ॥

---

[1] अ ६ । पा १ । सू १०५ ॥ [2] अ ३ । पा १ । सू १२४ ॥

---

अप्रातिपदिकत्वात् । ननु चार्थवत् प्रातिपदिकमिति (१ । २ । ४५) प्रातिपदिकसंज्ञाभविष्यति । नियमान्न प्राप्नोति । अर्थवत् समुदायानां समासग्रहणं नियमार्थमिति (१ । २ । ५४) ॥ यदि पुनः पृथक् सर्वेषां विभक्तिपराणामेकशेष उच्यते । पृथक्सर्वेषामिति चेदेकशेषे पृथग्विभक्त्युपलब्धिस्तदाश्रयत्वात् । वा ॥ पृथक्सर्वेषामिति चेदेकशेषे पृथग्विभक्त्युपलब्धिः

---

अनुदात्तस्य ह्यनुदात्त आदेशः प्राप्नोति ॥ लोप्यलोपितेति । भा । लोपनीयस्य लोपित्वं लोपसम्बन्धो न प्राप्नोतीत्यर्थः ॥ गर्ग्य इति । भा । प्रकृतिरर्थाभेदा-

---

नुसंश्रयमिति वार्त्तिकं दृष्ट्वा नामार्थ एवेष्टोदाहरणमिति भाष्यन्तः पराशाः । न च पदार्थतावच्छेदकभेदाभावाद् द्वन्द्वप्रसक्तिर्नेति वाच्यम् । "चार्थे

बहव इति । (कै)

अपत्यानां बहुत्वात् ॥ नन्वेकस्याः प्रकृतेः कथं बहवः परेऽत आह

यञा कृतेश्चेति । (कै)

यद्यपि जातेरेकैकव्यक्तिव्यङ्ग्यत्वं व्यक्तिद्वारकमेव परत्वं च तथाप्यव्यवहितव्यक्तिद्वारकं सर्वगतजातेः परत्वमित्यभिमानः । व्यक्तिपक्षेऽपि विजातीयव्यक्तिव्यवधानमेव व्यावर्त्यते न सजातीय तद्व्यवधानमित्यन्ये ॥

प्रत्ययानामेवेति । (कै)

समानाकारत्वादिति भावः ॥ इदं चिन्त्यम् एकविभक्तौ इत्युक्त्या तत्प्रकृतित्वाऽयोग्यानां केवलप्रत्ययानामेकशेषाप्राप्तेः । गर्गसहितानामेव हि तत्प्रकृतिता ॥

---

प्राप्नोति । किमुच्यत एकशेषे पृथग्विभक्त्युपलब्धिरिति यदा समयः कृतो न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्यय इति । तदाश्रयत्वात् प्राप्नोति । यत्र हि प्रकृतिनिमित्ता प्रत्ययनिवृत्तिस्तत्राप्रत्ययिकायाः प्रकृतेः प्रयोगो भवति । अग्निचित् सोमसुदिति (६ । १ । ६८) यथा । यत्र च प्रत्ययनिमित्ताप्रकृतिनिवृत्तिस्तत्राप्रकृतिकस्य प्रत्ययस्य प्रयोगो भवति । अधुना

---

दैकैव । यञ् प्रत्ययास्तु बहवः । यञाकृतेश्च एकत्वाद् व्यवधानाभावादनेकस्यापि प्रत्ययस्य परत्वं न विरुध्यते । तत्र गर्ग य य य इतिस्थिते यदा गर्गशब्दमुक्त्वा प्रत्ययानामेवैको यशब्द आदेशः क्रियते तदा तस्य बह्वर्थत्वाल्लुक्

---

द्वन्द्वे” (२ । ४ । ६९) इति सूत्रेण साहित्यमात्रे तद्विधानात् । तस्य चेतरेतरयोगद्वन्द्वे एकशेषे च विशेषणत्वं प्रयोगोपाधित्वं वा । समाहारद्वन्द्वे

विरूपाणामिति । (कै)

अव्ययशब्दयोरपि गर्गापत्यत्वेनैव बोधकत्वात् समानार्थत्वं बोध्यम् ॥

वक्र (कै)

इत्युक्तिस्तु संप्रतिपन्नविषयाभिप्रायेण ॥ कथं द्विवचनमत्र गर्ग-शब्दान्तर्गतयञ्शब्दस्यान्यत्वेन कथं यञन्तत्वापीत्यत आह

आदेशपक्षेऽपीति ॥ (कै)

वचनसामर्थ्यादिति । (कै)

लुग्वचनसामर्थ्यादिति भावः ॥

यञ् ब्रवीति । (कै)

एतेनावयवस्याप्रत्ययत्वात् लुगसंभव इति परास्तम् ॥

---

इयानिति यथा (५।२।३९, ३।६।४।१४८।५।२।४०।६।३।९१।६।४।१४८)। अस्तु। संयोगान्तलोपेन सिद्धम् (८।२।२३)। कुतो नु खल्वेतत् परयोर्यञ्शब्दयोर्निवृत्तिर्भविष्यति न पुनः पूर्वयोरिति। तन्नैवं स्यात् पूर्वनिवृत्तावपि सत्यां संयोगादिलोपेन सिद्धमिति (८।२।२९)। न सिध्यति। तत्रावरतो द्वयोः सत्याद्वयोः

---

सिध्यति। यदा तु विरूपाणामपि समानार्थानामेकशेषवदेक आदेशः सप्रकृतिकः क्रियते तत्र गर्गाय इत्यस्यान्ययोश्च यञ्शब्दयोर्गर्गशब्द आदेशः। तत्र यञ्शब्दान्तस्य गर्गे वृत्तिः न तु प्रत्ययमात्रस्येति भावः। यद्यपि वृद्धे गर्गे-

---

तु प्राधान्येन भानमित्यन्यदेतत्। न चैवमपि घटकलशावित्यादिद्वन्द्वापत्तिः। विरूपाणामपि समानार्थानामिति वार्त्तिकेन एकशेषात्। वस्तुतस्तु नैव इयानयमर्थः। रूप्यते बोध्यते इति रूपम्। अर्थः समानं रूपं येषामिति

लौकिकस्य गोत्रस्येति । (कै)

प्रवराध्यायप्रसिद्धस्येत्यर्थः ॥ "यस्कादिभ्य" (२।४।६३) इत्यतो "गोत्र" इत्यनुवृत्त्या गोत्रबहुत्वे वर्त्तमानस्य यञन्तस्य लुगिति व्याख्यानात् । इदं च[1] प्रकृतिबहुत्वे वर्त्तते । न तु गोत्रबहुत्वे इत्यदोष इति भावः ॥

लौकिकस्येति (कै)

सिद्धान्तस्वरूपकथनम् ॥ एकग्रहणविषयः प्रश्न इत्यभिप्रायेणो-त्तरयति भाष्ये

पय इति । (भा)

भिन्नविभक्तिव्यावृत्त्यर्थमेकग्रहणमिति भावः ॥ ननु भावे बहुपाणां द्वन्द्वापत्तिरत आह •

---

१ प्रकृतिबहुत्वे । क ॥

---

अवर्णा प्रसज्येत । यत्र च संयोगान्तलोपो नास्ति तत्र च न सिध्यति । क्व च संयोगान्तलोपो नास्ति । द्विवचनबहुवचनयोः ॥ यदि पुनः समास एवायं उच्यते । किं कृतं भवति । कश्चिदवर्णलोपः परिहृतो भवति ॥ तर्हि समासग्रहणं कर्त्तव्यम् । न कर्त्तव्यम् । प्रकृतमनुवर्त्तते । क्व प्रकृतम् । तिष्य पुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् (१।२।६३) इति ॥

---

स्विति । भा । आदेशपक्षेऽपि वचनसामर्थ्यात् साहूप्यात् यञ्लुङ्गुत्पादाद्य-न्तमेतद्विज्ञायते ॥ काश्यपा इति । भा । काश्यप इवायं तत्प्रतिकृति-रिति "इवे प्रतिकृतौ" (५।३।९६) इति विहितस्य कनो । "जीविकार्थे

---

चाद्यपाः । "देवपथादिभ्यश्च" (५।३।१००) इति लुमनस्य स भावः । सह-पान्त सदृशाः तेनाप्यभिति एकयोगेन व्याख्यानात् । न च लक्षे सखापार-

**जातिरिति ॥ (कै)**

**द्रव्यमिति । (कै)**

[1]तत्र प्रत्यर्थं शब्दनिवेश इति न्यायात् तत्तद्व्यक्तिप्रतिपादनाय नानाशब्दप्रयोगः प्राप्नोतीत्यर्थः ॥

**उपलक्षणं त्विति । (कै)**

यो रक्तवासाः स देवदत्त इत्यादौ [2]रक्तवासस्वद् इत्यर्थः । अन्यथानन्यात् तत्र शक्तिग्रहो न स्यात् । केवलाव्यक्तिरेव शब्दार्थः । [3]जातेः शक्तिग्रहे प्रकारत्वेऽपि न तत्र शक्यतावच्छेदकता नापि शक्यता ॥ शुद्धव्यक्तेरेव च शब्दाद् भानं शब्दस्यैव बोधे प्रकारतया न निर्विकल्पत्वं तस्य । तत्पक्षे चानुगतधर्माभानात्तेनानुगतानेकव्यक्तिबोधसम्भव इति सूचमिति भावः ॥

---

१ तत्र हि प्रत्यर्थम् । ङ ॥ २ रक्तवासस्त्ववत् । क । ङ ॥
३ केवलाव्यक्तिरेवशब्दार्थः जातेः शक्तिग्रहो न स्यात् इत्यधिकम् क पुस्तके ॥

---

समासः इति चेत् स्वरसमासान्तेषु दोषः । वा ॥ समास इति चेत् स्वरसमासान्तेषु दोषो भवति । स्वरः । अम्बश्चाम्बश्च अम्बौ । समासान्तोदात्तत्वे (६ । १ । २२३) सत एकशेषः प्राप्नोति । इदमिह सम्प्रधार्यम् । समासान्तोदात्तत्वं क्रियतामेकशेष इति किमत्र कर्त्तव्यम् । परत्वात् समासा-

---

यत्रश्चे" (५ । ३ । ६९) इति लुप् ततः काश्यपश्च काश्यपश्च काश्यपश्चेति प्रतिव्यक्तिप्रत्ययविवक्षायामेकः काश्यपशब्दः प्रयुज्यते सच बहुर्थोऽनन्तश्चेति

---

योगः वाक्यापरिसमाप्तिन्यायादिति वाच्यम् । उद्देश्यतावच्छेदकरूपाक्रान्ततया "तुल्यास्यप्रयत्नम्" (१ । १ । ९) इति वत् लक्ष्यमपि प्रवृत्तेः । एतद्

विशिष्टगुणक्रियाविषयतयेति ॥ (कै)

तदाश्रयत्वेनोपलक्षितानि इत्यर्थः ॥ [1]अपरे तु "किमर्थम्" इति प्रश्नभाष्यस्य तन्त्रेणैव सिद्धिरित्याशयः । तत्प्रकारणं च शब्दानां तुल्यरूपता यथाक्षा भज्यन्तां भक्ष्यन्तां दीव्यन्तामिति ॥

प्रत्यर्थमिति । (भा)

अक्षा दीव्यन्तामक्षा भज्यन्तामक्षा भुज्यन्तामित्यादौ वाक्ये प्रत्यर्थशब्दनिवेशस्यापि दर्शनात् कदाचित् तादृशप्रयोगे बहुविवक्षायां प्राप्तद्वन्द्वनिवृत्त्यर्थं सूत्रमावश्यकमित्याशयः ॥

किमिदं प्रत्यर्थमिति । (भा)

अर्थावर्थौ प्रतीत्यादेरपि तदर्थस्य संभवात् प्रश्नः । एकवचनान्तेन विग्रह इत्युत्तरम् ॥ नैकेनेति । (भा) नैकेनैवेत्यर्थः ॥

---

१ अपरे इत्यारभ्य यथाक्षा इत्यन्तं नास्ति क पुस्तके ॥

---

न्तोदात्तत्वम् । समासान्तोदात्तत्वे च दोषो भवति । स्वर ॥ समासान्त । ऋक् च ऋक् च ऋचौ । समासान्ते ( ५ । ४ । ७४ ) कृतेऽसारूप्यादेकशेषो न प्राप्नोति । इदमिह सम्प्रधार्य्यम् । समासान्तः क्रियतामेकशेष इति किमत्र कर्त्तव्यम् । परत्वात् समासान्तः । समासान्ते च दोषो भवति ॥ अङ्गाश्रये चैकशेषवचनम् । वा ॥ अङ्गाश्रये च कार्य्ये एकशेषो वक्तव्यः । लसा

---

लुक् प्रसङ्गः । लौकिकस्य गोत्रस्य तत्र ग्रहणमिति परिहार उत्तरत्र वक्ष्यते इतीह नोक्तः ॥ पथ इति । भा । उत्तरस्यार्थविप्रतिषेधादिति प्रत्याख्यानं करिष्यते । किमर्थं पुनरिति । भा । जातिः शब्दार्थः । तस्याश्चैकत्वात् अनेक

---

विषयविवेचनं तु "अ इ उण्" ( शिवसू- १ । ) इत्यत्रैव कृतम् । अत एव जननी वाचिनो मातृशब्दस्य धान्यमापवाचिमातृजन्तस्य च एकशेषं निषेद्धुं

अनेकशब्दत्वमिति ॥ (भा)

अनेकशब्दत्वमेवेत्यर्थः ॥

एकेनापीति । (भा)

अपिना वाक्यसंग्रहः । शास्त्रेण सह विवक्षाविषयशास्त्रीयद्वन्द्वस्यैव वारणाद् इति भावः ॥

किमिदमिति । (भा)

अक्षा इत्यादावेवाप्रत्यर्थशब्दनिवेशस्यापि दृष्टत्वेन विरूपविषयेऽपि लाघवायैकशब्दप्रयोग एव प्राप्तेऽनेकशब्दप्रयोगाय विरूपाणामनेकशेष एव कुतो नारभ्यत इत्यर्थ इत्याहुः ॥

हेतुरहितमिति । (कै)

प्रत्यर्थमित्यादिषु न हेतुः । अपशब्दत्वादिति भावः ॥ अत एव भाष्ये "दृष्टान्तमात्राय" इत्युक्तम् ॥

---

च सरूपौ च सरूपः । पदाश्रये ([२ । ४ । ७१ । ६ । ३ । २५ ।] ० । ३ । ११० । ६ । ४ । ११) कृतेऽसारूप्यादेकशेषो न प्राप्नोति । इदमिह सम्प्रधार्यम् । पदाश्रयं क्रियतामेकशेष इति किमत्र कर्तव्यम् । परत्वात्पदाश्रयम् । तिङ्समासे तिङ्समासवचनम् । वा ॥ तिङ्समासे तिङ्समासो वक्तव्यः ॥ एवं तिङ्ग्रहणमनर्थकम् । समासे तिङ्समास इत्येव । नानर्थकम् । तिङ्-

---

शब्दाप्रयोगः' । आश्रयगतसंख्याप्रतिपादनाय च द्विवचनबहुवचने भविष्यत इति प्रश्नः । अयं पदार्थ उपपद्यते त्वाकृतिरिति दर्शने सूत्रमारब्धमित्याह । प्रत्यर्थमिति । भा । यावन्ति द्रव्याणि विशिष्टगुणक्रियाविषयतया

---

प्रवृत्ते मात्रमात्रोः प्रविवेकः सरूपत्वादिति वार्त्तिके सान्तर्गते मातृमात्रोरित्यत्रापि निषेधप्रवृत्तिः । गम्यर्थविशेषोपचितयोरेव तत्रानुवादः । अन्यथा

## विरूपाणेकशेष इति । (कै)

अनेकशेष इत्यस्यानेकस्य शेष इत्यर्थो वा एकशेषो नेत्यर्थो वा एकशेषभिन्नो भवति इत्यर्थो वा । नाद्यः । त्रिषु प्रतिपाद्येषु द्वयोः प्रयोगापत्तेः । शेषशब्दस्वारस्येनैकानिवृत्तेरावश्यकत्वात् । न द्वितीयः । एकशेषप्राप्त्याऽसंभवात् इति चेन्न । तृतीयेऽदोषात् तथापि भिन्नशब्देन द्वन्द्व एव न तु वाक्यं "[1]वृद्धो यूना" इत्यादौ प्रसिद्धैकशेषस्य पुष्पवन्तौ इति न्यायेन सह विवक्षाविषयस्यैव सत्त्वेन तद्भिन्नस्य सह विवक्षाविषयस्य शास्त्रीयस्यैव ग्रहीतुमुचितत्वात् । तथेदं वचनं न घटपटावित्यादिविषयम् अप्रत्ययार्थशब्दनिवेशे शब्दानान्तु सरूपताया बीजत्वेन तदभावेन तस्याप्राप्तेः । किन्तु जननीपरिच्छेदकादिवाचकमात्रादिशब्दविषयं तयोरौजसादौ वैरूप्यात् । यथापि विभक्ता-

---

१ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः । १ । २ । ६५ ॥

---

समासे प्रकृते (२ । १ । ७२—गणसू) तिङ्समासो वक्तव्यः ॥ तिङ्विधिप्रतिषेधश्च । वा ॥ तिङ्च कश्चिद्विधेयः कश्चित् प्रतिषेध्यः । पचति च पचति च पचतः । तः शब्दो विधेयस्तिशब्दः प्रतिषेध्यः ॥ यदि पुनरसमास एकशेष उच्यते । असमासे वचनलोपः । वा ॥ यद्यसमासे वचनलोपो वक्तव्यः ॥ ननु चोत्पततैव वचनलोपं चोदिताः स्मः । द्विवचनबहुवचनविधिं

---

विवक्षितानि तावतां शब्दानामेकैकार्थोपस्थायां प्रयोगे प्राप्ते एकशेषारम्भ इत्यर्थः ॥ किमिदमिति । भा ॥ यदि हेतु रहितं दृष्टान्तमाश्रित्य विरूपानेकशब्दप्रयोगदर्शनात्सरूपैकशेष आरभ्यते तदा सरूपैकशब्दप्रयोगदर्श-

---

नवतो वाक्ययोरपि निषेधापत्तेः तत्त्वयं शब्दरूपपरे स्यान्तर्गते निषेधप्रवृत्ति-रिति चेत् "प्रकृतिवदनुकरणम्" इत्यतिदेशाद्विति द्रष्टव्यम् । वृत्तमते

वित्यावश्यकम् अन्यथा हरिमवर्णविशिष्टस्त्रीहरिणस्त्रीवाचकयोर्हरिणीशब्दयोस्तद्धिते वैरूप्येणानेकशेषापत्तेः । विभक्तिवाच्याधिकरणेन च वैरूप्यान्वयोऽन्यथाऽसम्भवात् । तथेदं न विधायकम् "[1]चार्थे द्वन्द्व" इत्यनेनैवसिद्धेः किन्तु नियमार्थं तेन लोकसिद्धसहविवक्षाविषयं तत्र व्याहतिः । तथा विरूपाणामेव द्वन्द्व इति च नियमः । अन्यथैकशेषारम्भेणास्य समफलकत्वानापत्तिः । तद्भावे हि स । येन नाप्राप्तिन्यायेन द्वन्द्वबाधक इति सरूपाणां[2] द्वन्द्वाभावस्पष्टत्वात् । अनेकशेषपदेन चावृत्त्या विरूपाणां[3] तत्सम्बन्धायसिद्धलौकिकैकशेषाभावोऽपि बोध्यते ॥ न वा स्वार्थस्यैकशेषारम्भे कथं सिद्धिः । आवृत्त्यासरूपाणामेवैकशेष इति नियमस्याप्यङ्गीकारात्

---

१ अ २ । पा २ । सू २९ ॥ २ द्वन्द्वाभावस्येष्टत्वात् । क ॥ ३ तत्र ॥

---

द्वन्द्वप्रतिषेधं च वक्ष्यति तदर्थं पुनश्चोद्यते ॥ द्विवचनबहुवचनविधिः । वा ॥ द्विवचनबहुवचनानि विधेयानि । वृक्षश्च वृक्षश्च वृक्षौ । वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इति ॥ द्वन्द्वप्रतिषेधश्च । वा ॥ द्वन्द्वस्य च प्रतिषेधो वक्तव्यः । वृक्षश्च वृक्षश्च वृक्षौ । वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इति । चार्थे द्वन्द्वः ( २ । २ । २९ ) इति द्वन्द्वः प्राप्नोति । नैष दोषः । अनवकाश एकशेषो

---

नाद्विरूपानेक शेषः किमिति नारभ्यत इति प्रश्नः । प्रयोगात्तु शब्दशक्तावधुगम्यमानायां न विं चिदारब्धव्यम् । द्व्यपदार्थपक्षेपि स्वभावादेकः शब्दोऽनेकमर्थं द्वादिवत् प्रत्याययिष्यति । अन्यथा एकशेषारम्भेपि कथं

---

तुसरसूत्रादेवकारोऽनुवर्त्यते । तेन एकविभक्तौ यानि सरूपाण्येवेति व्याख्यानात् परिच्छेदवाचिनश्च "अमून्" ( ६ । ४ । १९ ) इति सर्वनामस्थाने दीर्घविधानात् असारूप्यादेकशेषाभावः । न च वाचनिकैकशेषविरहेऽपि

इति बोध्यम्॥ ननु विरूपाणां भिन्नार्थानां नैकस्यानेकार्थाभिधान-शक्तिमत्त्वमित्येकशब्दाप्रयोगान्नानेकशेष आरम्भणीयोऽत आह

प्रयोगास्त्विति। (कै)

"व्युत्पादनार्थं वा" इति पाठे "वा" शब्दश्चार्थे। क्वचिद् "च"त्येव पाठः॥

प्रयोगानुसरणे इति। (कै)

प्रयोगाणां शास्त्रेणानुसरणे अन्वाख्याने इत्यर्थः॥

लाघवायेति। (कै)

सुराशब्दोपदेशेनापशब्दनिवृत्तिवदेकशेषारम्भेणानेकशेषनिवृत्तेः सिद्धत्वादिति भावः॥

---

द्वन्द्वं बाधिष्यते। सावकाश एकशेषः। कोऽवकाशः। तिङन्तान्यवकाशः॥ यदि पुनः पृथक् सर्वेषां विभक्त्यन्तानामेकशेष उच्यन्ते। किं कृतं भवति। कश्चिद्वचनलोपः परिहृतो भवति। विभक्त्यन्तानामेकशेषे (वा) विभक्त्य-न्तानामेकशेषे विभक्त्यन्तानामेव तु निवृत्तिर्भवति। एकविभक्त्यन्तानामिति तु पृथग्विभक्तिप्रतिषेधार्थम्। वा॥ एकविभक्त्यन्तानामिति तु वक्तव्यम्।

---

प्रत्यायकः स्यात्। न हि सतोऽसतो शक्तिराचार्य्येण कर्तुं शक्यते। मन्दबुद्धि-व्युत्पादनार्थं च यथास्थितप्रयोगानुसरणे कोनुरोधः सरूपैकशेषारम्भे न पुनर्विरूपानेकशेषारम्भे। लाघवायैकशेषारम्भस्त्वेतस्य। लघीयसी विरूप-प्रतिपत्तिः। तत्र हि प्रवृत्तिविषया बुद्धिरेकरूपैव भवति। एकशेषे तु

---

भिन्नरूपकल्पन इव तन्त्रन्यायाश्रयेण पाक्षिक एकशेषो मातृमात्रोः स्यादे-वेति वाच्यम्। यान्येकविभक्तौ सरूपाण्येव तेषामेवैकशेष इति नियमात्। न चैवं घट घटाविति पाक्षिकं दुर्वारमिति वाच्यम्। तन्त्रावृत्त्याद्याश्रयणेन

## यदा तु द्वयोरिति । (कै)

सरूपौ च सरूपाश्च इत्येकशेषेण निर्देशादिति भावः । एवं चावरतोद्वयोरिति भाष्यं यच बहूनामेकशेषस्तद्विषयमेवेति तात्पर्यम् ॥ नन्वेकशेषारम्भस्य गुरुत्वेन सुकरत्वमेव नास्ति कुतः सुकरतरकत्वमित्यत (सुकरकत्वम् । इ । क ।) आह

## एवं हीति । (कै)

[1]पृथक् प्रकरणतया [2]"वृद्धो यूना" इत्याद्यर्थं चैकशेषावश्यं वाच्यम् इति भावः ॥

## संख्येति । (कै)

"तेनैकदिग्" (४।३।११२) इति वत् समानवाचित्वे पृथक् सर्वेभ्यः उत्पन्नाया विभक्तेर्निमित्तत्वाभावाद्वार्त्तिकोत्थानं भज्येत । एवं चैकशेषविषयरूपसमुदायादेकत्वं संख्याविशिष्टविभक्तौ परत एकशेष

१ पृथक् प्रस्थानतया । इ ॥ २ अ १ । पा २ । सू ६५ ॥

किम्प्रयोजनम् । पृथग् विभक्तिप्रतिषेधार्थम् । पृथग् विभक्त्यन्तानां मा भूत् । ब्राह्मणाभ्यां च कृतं ब्राह्मणाभ्यां च देहि । न वार्थविप्रतिषेधाद्युगपद्वचनाभावः । वा ॥ न वैष दोषः । किं कारणम् । अर्थविप्रतिषेधात् । विप्रतिषिद्धावेतावर्थौ कर्त्ता सम्प्रदानमित्यशक्यौ युगपन्निर्देष्टुम् । तयोर्विप्रति-

प्रवृत्तिनिवृत्तिविषयेति प्रतिपत्तिगौरवप्रसङ्गः । अवरतोद्वयोरिति । भा । यदा त्रयाणामेकः शिष्यते तदा द्वयोर्निवृत्तिर्वक्तव्या व्याख्येयेत्यर्थः । शेषशब्दस्य निवृत्तिविशिष्टावस्थानवाचित्वात् । यदा तु द्वयोरेकशेषस्तदैकस्य निवृत्तिः । चतुष्प्रभृतीनां त्वेकशेषे त्रिप्रभृतीनां निवृत्तिरिति प्रवृत्तिनिवृत्तिलक्षण-

सरूपाणामेकशेष एवेत्यपरनियमाश्रयणात् । तस्मात् घटकुम्भौ कुम्भकुम्भौ माहभ्यां चेति पाक्षिकमनिष्टमिदं प्राप्तं वचनेनानेन वार्यते । "घटादि-

इत्यर्थः । किमिति प्रश्न इति भावः ॥ प्रष्टुराशयं विज्ञातुमाचेतरो भाष्ये "एवमि"त्यादि ॥ प्रष्टा स्वाशयमाह "एके"त्यादि ॥ "संख्या-भेदावगमे" द्वित्वाद्यवगमे इत्यर्थः । एवमपि प्रातिपदिकादित्येक-त्वस्य विवक्षायां न मानमत आह

गुणो चेति । (कै)

संख्यार्थत्वादिति भावः ॥

यथा कर्त्तुरिति । (कै)

कर्त्तुरित्यचेति भावः ॥

लक्ष्यसिद्ध्यर्थमिति । (कै)

एवं च पशुना इत्यादिदृष्टान्तदानमभ्युच्चयो विधेयगता संख्या विवक्षिता नानुवाद्यगतेत्येव मीमांसकमर्य्यादेति भावः ॥ वस्तु तस्तु

---

सिद्धत्वाद्युगपद्वचनं न भविष्यति ॥ अनेकार्थाश्रयश्च पुनरेकशेषः । वा ॥ अनेकमर्थं सम्प्रत्याययिष्यामीत्येकशेष आरभ्यते । तस्मान्नैकशब्दत्वम् । वा ॥ तस्मादेकशब्दत्वं न भविष्यति ॥ अयं तर्हि दोषः । कश्चिद्वचनलोपो द्विवचन-बहुवचनविधिर्द्वन्द्वप्रतिषेधश्चेति ॥ यदि पुनः प्रातिपदिकानामेकशेष उच्यते । किं कृतं भविष्यति । वचनलोपः परिहृतो.भवति ॥ प्रातिपदिकानामेक-

---

विषयभेदाद् बुद्धिगौरवापत्तिरित्यर्थः । सुकरतरकं चेति । भा । एवं हि प्रकरणमभिन्नरूपं भवति "वृद्धो यूने"त्यादिभिः सूत्रैरेकशेषस्य विधानात् । अनेकशेषारम्भे त्विह पृथक् प्रयत्नतया गौरवं स्यादित्यर्थः । किं पुनरिति । भा । किमयमेकशब्दः संख्यावाची तुल्यतावाची वेति प्रश्नः । एवं भवितु-

---

त्यादि सिद्धिस्तु स्यादेवैतद् विनापि हि" । जातिपक्षे व्यक्तिपक्षेऽपीति निष्कर्षसंग्रहः । स्यादेतत् । देव देव इत्यादावपि तर्ह्येकशेषः प्राप्नोति । न चैकविभक्तावित्यनेन तद्वारणम् । तस्य साक्ष्योपपन्नत्वादेकशेषस्य चाने-

समुदायस्य प्रातिपदिकत्वाभावादिति भाष्ये उक्तप्रातिपदिकत्व-पर्याप्त्यधिकरणात् प्रत्यय इति सूत्रार्थः । न हि प्रातिपदिक-समुदाये प्रातिपदिकत्वम् । यथा जनपदसमुदाये न जनपदत्व-मिति कैयटोक्तार्थोपयोगश्चिन्त्यः । परस्परापेक्षायां क्वचिदेकशेष इति शेषः ॥ समुदायार्थः समूहरूपः ॥

समुदाय इति । (कै)

समुदायोऽपीत्यर्थः ॥

न तु सुबन्तानामिति । (कै)

भेदसंसर्गद्वारकार्थवत्तानुपपत्त्यपमिदम् ॥

---

शेषे मातृमात्रोः प्रतिषेधः सरूपत्वात् । वा । प्रातिपदिकानामेकशेषे मातृ-मात्रोः प्रतिषेधो वक्तव्यः । माता च मानयित्री मातारौ च धान्यस्य मातृमातारः । किं कारणम् । सरूपत्वात् । सरूपाणि ह्येतानि प्राति-पदिकानि ॥ किमुच्यते प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधो वक्तव्य इति न पुनरस्यापि विभक्त्यन्तानामेकशेषस्तेनापि मातृमात्रोः प्रतिषेधो

---

मिति । भा । संख्यावाचित्वेनैकशब्दस्य प्रसिद्धतरत्वात् । नाभावादिति । भा । "ङ्याप्प्रातिपदिकादि"त्यनेकवचनान्तानामेव द्वन्द्वः क्रियते । वर्ति-पदार्थानां सर्वत्र संख्याभेदावगमे प्रमाणाभावात् । गुणे च संख्याविवक्ष्यते यथा पशुना यजेतेति । एवं चैकैकस्मात् प्रातिपदिकात् स्वादिभिर्भवितव्यं न तु समुदायात् । यत्र क्वचिद्गुणेऽपि संख्या न विवक्ष्यते यथा "कर्तुरीप्सित-

---

मित्तिकत्वात् । अथ वक्ष्यमाणरीत्या एकशेषविशेषणतां ब्रूषे तथाप्य-तिप्रसङ्गः । देवदेव इत्यत्रापि षष्ठी समासादुपरि एकविभक्तेः सत्त्वात् । अन्तर्वर्तिन्योस्तु लुकालुप्तत्वेन प्रत्ययलक्षणाभावात् । अथाङः । सह

तुल्येति । (कै)

यथा "एकदिग्" इत्यादौ प्रसिद्धतरार्थानुपपत्तौ प्रसिद्धार्थ-परिग्रहो न्याय्य इति भावः। तुल्यत्वं भेदाधिष्ठानं तेन पृथक्सर्वेभ्यः शब्दतोऽर्थतश्च । तुल्यायां विभक्तौ परतः एकशेष इति तात्पर्य्यम् ॥ अर्थतश्च इत्युक्ते प्रथमा द्वितीया द्विवचनान्तानां नैकशेषः । विनि-गमनाविरहादर्थतश्चेत्यस्य लाभः । तदाह

इत्यस् (कै)

इत्यादि ॥

केवलानामिति । (कै)

निवृत्तप्रकृतीनामित्यादिः ॥ भाष्ये

---

वक्तव्यः स्यात् । तत्रापि ह्येतानि कानिचिद्विभक्त्यन्तानि सरूपाणि । माहृभ्यां च माहृभ्यां चेति । अथ मतमेतद्विभक्त्यन्तानां सारूप्ये भवितव्यमेवैकशेषे-णेति प्रातिपदिकानामेवैकशेषे दोषो भवति । एवं च कृत्वा चोद्यते ॥ हरितहरिणश्येतश्येनरोहितरोहिणानां स्त्रियामुपसंख्यानम् । वा॥ हरित-

---

तममि"ति द्वयोर्वृक्षयोर्वा वेष्टिततमस्य कर्म.संज्ञा प्रवर्तते तत्र नान्तरीयकं संख्याया उपादानमिति व्यपसिद्धार्थमाश्रीयते । ननु चेति । भा । अव-यवार्थातिरेकेण परस्परापेक्षायां सत्यां समुदायार्थोपजननात् सरूपसमु-दायाभिनिवेशिन्येका प्रातिपदिकसंज्ञास्ति तथा सरूपसमुदाय एकं प्राति-

---

विवक्षायामेव एकशेषः । इतरेतरयोगद्वन्द्वस्य विषये इति यावत् । यत्र ह्यनेकस्यार्थस्य मिलितस्येतरान्वयः स तथाभूतो विषयः । उक्तं च* "अनुस्यूतेव

---

* अनुस्यूते च भेदानामेका प्रख्योपजायते ।

यदा तदा विवक्षा तामाहुर्द्वन्द्वैकशेषयोः ॥ इति पाठोऽपि दृश्यते ॥

तदाश्रयत्वादिति । (भा)

बहुत्वादेस्तु विभक्त्याश्रयत्वात् तत्प्रत्ययैकशेषस्येत्यर्थः ॥

न केवला (भा)

इत्यस्य च अनुत्पन्नप्रत्यया प्रकृतिः प्रकृतेरनुत्पन्नस्य प्रत्ययो न प्रयोक्तव्य इति तात्पर्य्यमिति भावः ॥

अधुनेति । (भा)

यदेदमोधुना प्रत्यय इग्लोपश्च तदेदं निमित्तापायपरिभाषा नास्त्येव इत्यन्यत्र प्रपञ्चितम् ॥

संयोगान्तेति । (भा)

एवं[1] च निवर्त्तमानवृत्तशब्दसम्बन्धिविभक्तिश्रवणप्रसङ्गरूपो दोषो वारित इति भावः ॥

---

१ एवं वर्त्तमान- । ह ॥

---

हरिणश्येतश्येनरोहितरोहिणानां स्त्रियामुपसंख्यानं कर्त्तव्यम् । हरितस्य स्त्री हरिणी । हरिणस्यापि हरिणी । हरिणी च हरिणी च हरिण्यौ । श्येतस्य स्त्री श्येनी । श्येनस्यापि श्येनी । श्येनी च श्येनी च श्येन्यौ । रोहितस्य स्त्री रोहिणी रोहिणस्यापि रोहिणी । रोहिणी च रोहिणी च

---

पदिकमिति स्वाद्युत्पत्तिरविवक्षा । अर्थवत् समुदायानामिति । भा । अविशेषेण नियमो न तु सुबन्तानामेवेति मन्यते । इदानीं तुल्यपर्यायमेकशब्दमाश्रित्याह । पृथक् सर्वेषामिति । भा । वृक्षस् वृक्षस् वृक्षस् इति स्थिते विभक्तौ परतो यानि सरूपाणि तेषामेकशेष उच्यमाने विभक्तिनिमित्तत्वात्

---

भिन्नानामेका प्रख्योपजायते । यदा बहुविवक्षान्तामाह "द्वन्द्वैकशेषयोः" इति । अयञ्च विषयनियमोऽभिधानवशाल्लभ्यते । "वृद्धो यूना" (१ । २ । ६५)

नन्विति । (कै)

संयोगान्तस्य पदस्य इति पाठः। “संयोगान्तस्य पदान्तस्य” इति तु व्याख्यानमसङ्गतमेव [1]“स्वमोः” इति सूत्रे “द्विप्रकारको निर्देशः” इति भाष्यविरोधात्। संयोगसंज्ञासूत्रेऽन्तपदसामर्थ्येन द्विवचनान्तेन समास इति ध्वनयता भाष्यकृता प्रयोजनान्तराभावस्य ध्वनितत्वेन तादृशेऽर्थे मानाभावाच्च ॥ दोषान्तरमप्याह

संयोगान्तलोपस्य चेति ॥ (भ)

हल्ङ्याभ्य (कै)

इति च तत्र[2] सुति सिति प्रत्ययैः प्रकृत्याक्षेपात् तस्याप्यप्राप्तिः तदाक्षेपे मानाभावात् फलाभावाच्चेत्यभिप्रायः ॥ केचित्तु आष्टमिकपद-

१ अ ६। पा ४। सू ११९ ॥ २ न च तत्र। इ ॥

रोहिण्यौ ॥ न वा पदस्यार्थे प्रयोगात्। वा ॥ न वैष दोषः। किं कारणम्। पदस्यार्थे प्रयोगात्। पदमर्थे प्रयुज्यते विभक्त्यन्तं च पदम्। रूपं चेहाश्रीयते रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्। तस्मिंश्च लौकिके प्रयोगे सरूपाण्येवानि ॥ अपर आह न वा पदस्यार्थे प्रयोगात्।

प्रकृतिनिवृत्तेः केवलानां विभक्तीनां प्रयोगप्रसङ्ग इत्यर्थः। संयोगान्तलोपेनेति। भा। वृक्ष स् स् स् इति स्थिते संयोगान्तलोपो भविष्यति। ननु संयोगान्तस्य पदस्य लोप उच्यते तत्र पूर्वपदं सकारान्तं द्वौ सकारौ पदे इति पदत्रयं संपद्यत इति कुतो लोपः। संयोगान्तलोपस्य चापवादः

इत्यादि सूत्रेषु सहयोगे तृतीयायाः प्रयोगाच्च। यद्वा। पूर्वसूत्रात् द्वन्द्व इत्यनुवर्तते। अर्थाधिकाराच्चेतरेतरयोगद्वन्द्वावगमः। तेन द्वन्द्वे प्रसक्ते सतीति व्याख्यानात् उक्तविषयनियमसिद्धिः। न च द्वन्द्वे कृत इत्येव

द्विर्वचने भाष्यकृता वक्ष्यमाणं पचपचि पचतीत्यादेः समुदायस्य पदत्ववद्विनापि दृष्टव्यम् इति समुदायस्य पदत्वं दृष्टमन्ये तत्प्रत्यभिज्ञानात्। अन्यप्रकारे स्पष्टम्। इदृशे विषये संयोगादिलोप संयोगान्तलोपयोरविशेषेण भाष्ये संयोगान्तलोप उक्तः। हल्ङ्यादिलोपस्तु हलन्तप्रकृतेः पर इत्यर्थाश्रयत्याशयः। प्रत्येकं संयोगसंज्ञा इति पक्षे स्वपरसंयोगादित्वेन संयोगादिलोपो भाष्योक्तः साधुरेव तत्र सूत्रे सर्वेत्यनाश्रित्य चेदं प्रकारान्तरेणास्य दूषयिष्यमाणत्वाच्च तदनाश्रयणं तस्य प्रत्याख्यानाच्चेत्याहुः॥ नन्वेकशेषं विना कथं द्विवचनादेः सम्भवोऽत आह

स्वभावत इति॥ (कै)

कृतैकशेषाणां चेति। (कै)

इदं च हलन्ताभिप्रायं तत्र हि हल्ङ्यादिलोपे प्रत्ययलक्षणेन विभक्तिपरतयैकशेषे द्विवचनादौ पुनरेकशेष इत्यर्थः॥ भाष्ये

---

न चैष पक्ष एवास्ति प्रातिपदिकानामेकशेष इति। किं कारणम्। पदस्यार्थे प्रयोगात् पदमर्थे प्रयुज्यते विभक्त्यन्तं च पदम्। रूपं चेहाश्रीयते रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकम् प्रयोगम्। तस्मिंश्च लौकिके प्रयोगे

---

संयोगादिलोपत्वेन माव्यम्। "पूर्वत्रासिद्धमि"ति वचना"द्धल्ङ्यादि"लोपेनैव च भाव्यम्। अत्र व्याचक्षते। संयोगस्य योऽन्तः सकारस्तस्य लोपः स च "हल्ङ्याब्भ्य" इत्यनेनेति। संयोगादिलोपेनेति। भा। अत्राप्येकपदस्य संयोगस्यादिर्नास्तीति हल्ङ्यादिलोपमेव संयोगादिलोपं प्रतिपन्नाः।

---

व्याख्यायतामिति वाच्यम्। सरसमासान्तादि दोषप्रसङ्गेन कृतद्वन्द्वानामेकशेष इति पक्षस्य दूषयिष्यमाणत्वात्। एतेन "सारव कारवोर्मिम"

यदि पुनः समासेति । (भा)

द्वन्द्वे इत्यनुवर्त्त्य तत्र कृते इति व्याख्यानात्तस्य निमित्ततया नासौ द्वन्द्वबाधकः। द्वन्द्वे कृते एकविभक्तौ परतः सरूपाणामेकशेषः इत्यर्थः। अत्र पक्षे संख्या वाच्यैवैकशब्दः॥ समासान्तर्गत सर्व वचनलोपात् कश्चिद्दिग्यद्युक्तमत आह

यस्त्वयेति । (कै)

यस्त्वया वचनलोपाच्चिह्निरूपः कश्चिद् दोष उक्तः स परिहृत इत्यर्थ इति भावः॥ अथाध्याहारगौरवमाशङ्क्याह

---

प्रातिपदिकानां प्रयोगो नास्ति॥ अथानेन पक्षेणार्थः स्यात् प्रातिपदिकानामेकशेष इति। वाढमर्थः। किं वक्तव्यमेतत्। न हि। कथम् अनुच्यमानं गंस्यते। एतेनैवाभिहितं सूत्रेण सरूपाणामेकशेष एकविभक्तौ इति। कथम्। विभक्तिः सारूप्येणाश्रीयते। अनैमित्तिक एकशेषः। एकविभक्तौ यानि सरूपाणि तेषामेकशेषो भवति। क्व। यत्र वा तत्र वेति॥ अथानेन पक्षेणार्थः स्याद्विभक्त्यन्तानामेकशेष इति। वाढमर्थः। किं वक्तव्य-

---

संयोगस्यासौ प्रत्येकं हलां संयोगसंज्ञेति पक्षाश्रये, आदिस्थ वृक्षशब्दापेक्षया तस्य लोपो "हलङ्याबि"त्यनेनेत्यर्थः। अवरत इति। भा। स् वृक्षसिति प्राप्नोति। दुष्टत्वप्रतिपादनपरं चैतत् न पुनः कदाचित्तयाणां अवणप्रतिपादनार्थः। द्विवचनबहुवचनयोरिति। भा। ये स्वभावादेव द्विवचनबहुवचनान्ताः प्रयुज्यन्ते गोदौ दाराः सिकता इत्यादयः। तत्र द्विवचनबहुवचनेषु परत एकशेषे सति द्विवचनबहुवचनानां अवणप्रसङ्गः।

---

इति श्रीहर्षप्रयोगोऽपि व्याख्यातः। सरस्यां भवाः सारसाः। ते च ते आरवसहिताश्चेति कर्मधारये सह विवक्षा विरहात्। "विद्यमानस्य राजहंस" इत्यादिश्लिष्टरूपके तु मानसमेव मानसमिति तन्मेण प्रयोगो

अथवेति ॥ (कै)

समासान्तोदात्तत्वे च कृते इति । (कै)

विभक्त्यपेक्षैकशेषापेक्षयान्तरङ्गत्वादिति भावः ॥

प्रसङ्ग इति । (कै)

इष्यते त्वाद्युदात्तत्वमिति भावः । ब्रह्मशब्दस्य मनन्तत्वात् । परत्वादित्यस्य उत्सृष्टत्वात् पूर्वकालप्राप्तत्वादित्यर्थः । एकशेषस्तु समासादिभक्त्युत्पत्त्युत्तरमिति भावः । एवमप्येऽपि । एवं चापवादत्वाशङ्का-चिन्त्यैव । ब्राह्मणेभ्यो दधि इत्यादावविरोधेऽपि दधिदानतः पूर्वं परत्र वा सावकाशत्वेऽपि [1]बाधदर्शनात् समाधिरपि चिन्त्यः ॥ भाष्ये

१ बाधकत्व- । क ॥

मेतत् । न हि । कथमनुच्यमानं गंस्यते । एतदप्येतेनैवाभिहितं सूत्रेण सरूपाणामेकशेष एकविभक्ताविति । कथम् । नेदं पारिभाषिक्या विभक्तेर्ग्रहणम् (१।४।१०४) । किं तर्हि । वचनलोपो द्विवचनबहुवचनविधिर्द्वन्द्वप्रतिषेधश्चेति । नैष दोषः । यत्तावदुच्यते कश्चिद्वचनलोपो द्विवचनबहु-

कृतैकशेषायां वा पुनरेकशेषे क्रियमाणे द्विवचनबहुवचनश्रवणप्रसङ्गः । कश्चिद्वचनलोप इति । यस्त्वया कश्चिद्वचनलोप उक्तः स परिहृतः । अथ वा सुपां परिहृतो न तिङामित्यर्थः । स्वरसमासान्तेष्विति । भा । समासे कृते समासान्तोदात्तत्वे च यदि पूर्वशेषस्तदा सर्वानुदात्तत्वं प्राप्नोत्यथ परशेषस्तदा ब्रह्मशब्दस्यान्तोदात्तत्वप्रसङ्गः । परत्वादिति । भा । ननु प्राप्ते समासान्तोदात्तत्वे आरभ्यमाण एकशेषस्तस्य बाधकः । नैतदस्ति । निरवकाशो हि

न तु लोक एकशेषः । सह विवक्षा विरहात् । तावत इत्यत्रापि तथा स्यादिति चेद् पक्षे एवमेव । वस्तुतोऽपि उभयपक्षयोरस्य निर्बाधत्वात् । न

## असारूप्यादिति । (भा)

समासान्तप्रागभागस्य विभक्तिपरत्वाभावः । तद्विशिष्टस्य तु न सरूपत्वम् ॥

## एकशेषो न स्यादिति । (कै)

किं चैकशेषेसत्यपि ऋचावित्यस्यासिद्धिरिव । ऋचे इत्येवमापत्तेः । ऋग् ऋच्शब्दयोरेकशेषे तु पक्षे तत् सिद्धिरस्ति इति बोध्यम् ॥

## उत्तरपदस्यान्तादिति । (कै)

अयं पक्षस्तु निर्मूल एवेति पञ्चमषष्ठयोर्वक्ष्यामः । "गोस्त्रियोः" (१।२।४८) इत्यत्रोक्तं च ॥

---

वचनविधिरिति । सहविवक्षायामेकशेषः । युगपद्विवक्षायामेकशेषेण भवितव्यम् । न तर्हीदानीमिदं भवति वृक्षश्च वृक्षश्च वृक्षौ वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इति । नैतत्सहविवक्षायां भवति । यथापि निदर्शयितुं बुद्धिरेवं निदर्शयितव्यम् । वृक्षौ च वृक्षौ च वृक्षौ । वृक्षाश्च वृक्षाश्च वृक्षाश्च

---

बाधको भवति । कृते च समासान्तोदात्तत्वे एकशेषस्य प्रवर्त्तनाविरोधाभावाच्च नाप्युत्सर्गापवादभावः । ऋक् चेति । भा । ऋच् ऋच् अ इति स्थिते अन्तर्वर्तिन्या विभक्तेर्लुकालुप्तत्वात् प्रत्ययलक्षणाप्रतिषेधाभावस्त्येकविभक्तिपरतेति एकशेषनिमित्तं समुदायाद्विभक्त्युत्पाद्या तस्यां च नास्ति सारूप्यं एको हि ऋक्शब्दः अपर ऋच्शब्दः समासान्तः । समासस्यैवावयवो नोत्तरपदस्येति चेत्तर्हि तेनैव व्यवधानात् समासविभक्तेरेकशेषो

---

नैवं समाहारद्वन्द्वविषये एकशेषानुशासनात् पाक्षिकं घटघटमित्यादिदुर्वारमेवेति वाच्यम् । तत्रानभिधानस्यैव शरणीकरणीयत्वात् । अस्तु वा

## [1]भाष्यकारस्य मतमिति । (कै)

एवं विधं भाष्यं न दृश्यत इति चिन्त्यमिदम् । न चेदं भाष्यमेव तथान्यथैकस्यार्थवत्त्वेनापरस्यानर्थकत्वेन कथमेकशेष इति वाच्यम् । द्वन्द्वावयवानामर्थवतामेवैकशेष इत्यर्थे मानाभावात् । विशिष्टरूपोपादानविषयायाः अर्थवत् परिभाषाया इहाप्राप्तेः ॥

## सर्वथेति । (कै)

समासविभक्त्यन्तर्वर्त्तिविभक्तौ चेत्यर्थः ॥ तदेवाह

## यद्यन्तरिति । (कै)

न च विग्रहप्रदर्शनेन स्पष्टमेवोक्तम् ॥

---

१ भाष्यकारस्य दर्शनमित्युपलब्धकैयटेऽस्ति ॥

---

वृद्धा इति ॥ यदप्युच्यते द्वन्द्वप्रतिषेधश्च वक्तव्य इति । नैष दोषः । अनवकाश एकशेषो द्वन्द्वं बाधिष्यते । ननु चोक्तं सावकाश एकशेषः । कोऽवकाशः तिङन्तान्यवकाश इति । न तिङन्तान्येकशेषारम्भं प्रयोजयन्ति । किं कारणम् । यथा जातीयकानां द्वितीयस्य पदस्य प्रयोगे सामर्थ्यमस्ति

---

न स्यात् । समासार्थस्योत्तरपदस्यान्तः समासान्त इत्यपि भाष्यकारस्य दर्शनमिति अजटचशब्दयोर्वैरूप्यमाश्रित्य भाष्यकृता दोष उद्भावितः । अक्ताश्रये चेति । चशब्दादनक्ताश्रयेऽपि । यथा गौश्च गावौ चेति । स्वसा च स्वसारौ चेति । किमर्थमेकमेकवचनान्तं द्वितीयं तु द्विवचनान्तमिति चेत् सर्वथा वैरूप्यप्रतिपादनाय । तथा हि । यद्यन्तर्वर्तिन्यां विभक्तौ

---

तत्राप्येकशेषप्रवृत्तिः । न चैवं नपुंसकतापत्तिः । समाहारद्वन्द्व एव तदनुशासनात् । तथा च प्रत्यर्थं शब्दनिवेश इति पक्षे न आहत्य द्वन्द्यादित्यादौ

वचनसामर्थ्यादिति। (कै)

लुकाभुमत्वादिति भावः[१] ॥

अथापीति। (कै)

द्वन्द्वे सुप् लुकि औत्तरपदिकानङि ततो विभक्तौ "ऋतो ङि" (७।३।११०) इति गुणे "अप्तृन्" (६।४।११) इति दीर्घे च परत्वात् कृते इति भावः। एकवचनान्तेन विग्रहे तु समास-विभक्तावेव वैरूप्यम्। अन्तर्वर्त्तिन्यां तु नेति तात्पर्य्यम् ॥

१ अथापीतीत्यारभ्य इति भाव इत्यन्तं नास्ति क पुस्तके ॥

तथा जातीयकानामेकशेषः। न च तिङन्तानां द्वितीयस्य पदस्य प्रयोगे सामर्थ्यमस्ति। किं कारणम्। एका हि क्रिया। एकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यमुक्तार्थानामप्रयोग इति। यदि तर्ह्येका क्रिया द्विवचनबहुवचनानि न सिध्यन्ति। पचतः पचन्ति। नैतानि

लुप्तायामपि वचनसामर्थ्यात् प्रत्ययलक्षणमाश्रीयते तदात्र वैरूप्यमथापि समासविभक्त्यैकविभक्तिपरत्वं तथापि वैरूप्यं तिङ्समास इति। समास एकशेषे विधीयमाने तिङ्समासेऽप्येकशेषो वक्तव्यः। स च तिङ्समासो वक्तव्य इत्यर्थः। एकमिति। भा। विनापि तेनार्थस्यावगमात्। प्रकृत इति। भा। आख्यातमाख्यातेनेत्यत्र द्वन्द्वस्य सरूपाणामिति वक्तव्यम्। यदि पुनरिति। भा। दोषान्तराभिधानाय पुनरुपन्यासः। तदर्थमिति। भा। पूर्वं दोषमात्रमुप-न्यस्तं केवलाया विभक्तेः श्रवणं प्राप्नोतीति। इदानीं तु तत्प्रतिविधानाय वचने क्रियमाणे गौरवमापद्यत इत्येतत्प्रतिपाद्यते तिङन्तान्यवकाश इति

सकलव्यक्तिसंग्रहो भविष्यतीति प्रतिव्यक्ति लक्षणं नावर्त्तनीयम्। एकव-चनस्यान्यतरस्यामिति ज्ञापकादेकशेषे कृते एकवद्भावो नेति तु तत्त्वम्।

समास एकशेषे इति। (कै)

प्रत्यर्थं शब्दनिवेशे एक पचा एका क्रियोच्यते एकेन च तिपैकः कर्त्तेति अनेकक्रियाकर्तृविवक्षायामनेकतिङन्तप्रसङ्गे एकशेष इष्यते स च तेषां समासाभावात् ॥

न प्राप्नोतीति। (कै)

बहुपतिङन्तानामपि द्वन्द्वो वाच्य इत्यर्थः ॥ आद्ययोस्तिङो- लोपेऽपि समासव्याख्यानत्वात् ततस्तिङोऽप्राप्तेश्च भाष्ये

तिङ्विधिरिति ॥ (भा)

सुप् ग्रहणात्तिङो लुगप्राप्तेश्च

---

क्रियापेक्षायाम्। किं तर्हि। साधनापेक्षायाम्। अथवा पुनरस्त्वेक- विभक्ताविति। ननु चोक्तमेकविभक्ताविति चेन्नाभावाद्विभक्तेरिति। नैष दोषः। परिहृतमेतत्। अर्थवत् प्रातिपदिकमिति प्रातिपदिकसंज्ञा भविष्य- तीति। ननु चोक्तं नियमान्न प्राप्नोति। अर्थवत् समुदायानां समासग्रहणं

---

कारकभेदात् क्रियाभेदादनेकतिङन्तप्रसक्तौ एकशेषो विधेयः। ततश्च परत्वात् सरूपाणामेकशेषं बाधित्वा द्वन्द्वः प्राप्नोति सकृद्गतौ विप्रतिषेध इति पुनरेकशेषो न प्राप्नोति सत्यपि वा पुनः प्रसङ्गविज्ञाने स्वरसमासा- न्तेषु दोष एव। यदि पुनरिति। भा। सप्तमीनिर्देशे प्रकृतिमात्रनिवृत्तौ प्रत्ययश्रवणप्रसङ्गः षष्ठीनिर्देशे तु विभक्त्यन्तानां निवृत्त्या भाव्यमिति नास्ति केवलविभक्तिश्रवणप्रसङ्गः। कश्चिदिति। भा। शिष्यमाणस्य त्वेकवचनश्रवण- प्रसङ्ग एव। एकविभक्त्यन्तानामिति। भा। सप्तमीनिर्देशमपास्य तु प्रयोजन-

---

एकश्चैकश्च द्वौ च द्वौ च इत्यादौ तु द्वन्द्वैकशेषौ उभावपि अनभिधानेनैव वारणीयौ। अन्ततः सहस्राद्यन्तेऽप्येवमेवेति बोध्यम्। विंशत्यादौ तेषामेव

प्रतिषेधश्चेति । (भा)

प्रतिषेधोऽच लोपः । उपलक्षणमिदं पादौ पादा इत्यादावेक-
वद्भावस्यापि प्रसङ्ग इत्यपि बोध्यम् ॥

पुनरुपन्यास इति । (कै)

द्वितीयपक्षस्येति शेषः । उत्पततैव तत्पक्षदूषणमुपक्रमतैव पृथग्
विभक्त्युपलब्धिसद्भावयत्नादित्यनेन "चोदिताः स्म" इति अर्थः ॥
दूषणान्तरं वक्तुमुक्तानुवाद इत्याह

द्विवचनेत्यादि ॥ (भा)

वक्ष्यतीति । (भा)

वार्त्तिककृदिति शेषः ॥

---

नियमार्थमिति । नैष दोषः । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः ।
यथा जातीयकानां समासः । कथं जातीयकानां समासः । सुबन्तानाम् ॥
सर्वत्रापत्यादिषूपसंख्यानम् । वा । सर्वेषु पक्षेष्वपत्यादिषूपसंख्यानं कर्त्तव्यम् ।
भिक्षाणां समूहो भैक्षमिति (४ । २ । ३८) ॥ सर्वत्रेत्युच्यते प्रातिपदिकानां

---

युक्तमेव वचनलोपः परिहृत इति । न वेति । भा । एकविभक्त्यन्तानामिति
न कर्त्तव्यमेव प्रयोजनाभावात् ततश्चानुत्पन्नायामेव विभक्तौ प्रातिपदिकाना-
मेकशेषे कृते स्थिष्यमाणस्य निवर्तमानार्थाभिधानाद्द्विवचनबहुवचनसिद्धिः ।
विप्रतिषिद्धाविति । भा । चतुर्थ्यन्तस्य शेषे भ्रातृभ्याश्च इत्युक्ते यं कर्तृत्वं न
प्रतीयते । तृतीयान्तस्य शेषे भ्रातृभिरित्युक्ते संप्रदानत्वं न गम्यते यश्च
शब्दोऽनेकार्थप्रत्यायनाय प्रभवति स स्थिष्यते नान्यः । अयं वर्हीति । भा ।

---

इह एवेति दिक् । एवं स्थिते सूत्रारम्भपक्षेऽपि बहुषोऽनभिधानमेवाश्रय-
णाद् घटघटा इत्यादावपि तथैवास्तु किं तन्निरासार्थं सूत्रारम्भेण इत्याद्येन

## तदर्थम् (भा)

तदवतारणार्थम् ॥

## पुनश्चोच्यते इति । (भा)

असमासे वचनलोप इत्येतदित्यर्थः ॥ वक्ष्यतीति यदुक्तं तदाह

## द्विवचनेति । (भा)

केवलं धोः श्रवणमेव न दोषोऽपि तु द्विवचनाद्यसिद्धिरपि वचनादिविभक्तिलोपे कृतेऽपि [1]प्रत्ययलक्षणेनाप्रत्यय इति निषेधात् प्रातिपदिकत्वाभावेन द्विवचनाद्यनापत्तेः । तदर्थं वचनारम्भे गौरवं

---

[1] अ १ । पा १ । सू ६२ ॥ प्रत्यय इति निषेधात् । इ ॥

---

चैकशेषे सिद्धम् । अपत्यादिष्वित्युच्यते बहुवस्थापत्यादयः । गर्गस्यापत्यं बहवो गर्गाः ( ४ । १ । १०५ ॥ २ । ४ । ६४ ) । एका प्रकृतिर्बहवश्च यञः । असारूप्यादेकशेषो न प्राप्नोति । ननु च यथैव बहवो यञ एवं प्रकृतयोऽपि बह्व्यः स्युः । नैवं शक्यम् । इह हि दोषः स्यात् । गर्गाः वत्साः विदाः उर्वा

---

एकविभक्त्यन्तानामिति तु क्रियमाणे प्रत्युत दोषः । कश्चिदिति । भा । ध्रियमाणस्यैकवचनस्य लोपो वक्तव्यः । यदि पुनरिति । भा । एकविभक्ताविति न क्रियते "क्लो नपुंसक" इत्यतः प्रातिपदिकग्रहणमनुवर्त्यानुत्पन्नायामेव विभक्तौ सरूपाणां प्रातिपादिकानामेकशेषः क्रियते । तिङन्तेषु कथम् । उच्यते । लौवस्थायामेव पच् ल पच् ल इति स्थिते कृदन्तत्वात् प्रातिपदिकत्वे सत्येकशेषः । मातृमात्रोरिति । भा । कथमयं निर्देशः यावतैकशेषेण

---

भगवता एकशेषप्रकरणम् प्रत्याख्यातम् । न चैवं पितरावित्यत्र मातुः श्वशुरावित्यादौ श्वश्र्वादेश्च प्रतीतिः कथं स्यादिति वाच्यम् । एकशेषारम्भेऽपि तौल्याव् । यः ध्रियते स लुप्यमानार्थाभिधायीति चेत् तर्हि

च "नङि सम्बुध्योः" इति ज्ञापकं च न लोपविषयमेवेत्यर्थः ॥

भाष्ये ज्ञापकस्य सामान्यापेक्षत्वेऽपि दोषमाह

**द्वन्द्वप्रतिषेधश्चेति।** (भा)

द्वन्द्वस्य वैकल्पिकत्वात्तदभावेऽस्य सार्थक्यं मन्यते ॥

**अनवकाश इति।** (भा)

सहविवक्षायां व्यपेक्षाभावे ह्येकशेषस्तत्र च द्वन्द्वस्य नित्यता विशेषणविशेष्यभावानापन्नस्यानेकस्य युगपदेकपदार्थसम्बन्धबोधनेच्छा सह विवक्षेति भावः ॥

---

१ अ ८। पा २ सू ८॥

---

इति। अव्यो बह्वृषु यव्यो बह्वृष्विति ग्रुच्यमानो लुम् प्राप्नोति। मा भूदेवम्। अजन्तं यह्वृषु यजन्तं यह्वृष्वित्येवं भविष्यति। ननु चोक्तं नैवं शक्यमिह हि दोषः स्यात् काश्यपप्रतिकृतयः काश्यपा इति। नैष दोषः। लौकिकस्य

---

भावम्। एकशेषे सति विवक्षितार्थानवगमात् तदभावः। एवं ह्यत्रार्थो विवक्षितः जननीवाचिनः परिच्छेदवाचिनश्च मातृशब्दस्यैकशेषप्रतिषेधो वक्तव्य इति। एष चार्थो मात्रोरित्युक्ते न गम्यते। अथ मतमेतदिति। अर्थविप्रतिषेधादेकशेषो न भवति। कृते ह्येकशेषे ताभिरित्यनुप्रयोगे द्वयमर्थो न प्रतीयते तैरिति चोक्ते स्त्र्यर्थानवगतिः। अभ्युपगम्यवादेन त्वेतदुच्यते विभक्त्यन्तानां सारूप्य इति। प्रातिपदिकावस्थायां सर्वदा सारूप्यात् सर्वत्रैकशेषः स्यात् विभक्त्यन्तानां तु सरूपाणामेकशेषे यत्रैव

---

द्विवचनाद्युपाधिविशेषपुरस्कारेण पित्रादिशब्दानामेव मात्रादौ शक्ति-किल्पनया चेति फलितोऽर्थः। तथा च लोकव्यवहारादेव तद्ग्रह-सम्भवे न किंचिदनुपपन्नम्। न चैवमभिविदित्यादौ क्रियादयोऽपि

कारकभेदादिति । (भा)

न हि तत्र द्वन्द्वप्राप्तिः सुबन्तानां तद्विधानात् । इदमवकाश-मात्रं न त्वेकशेषेणेष्टसिद्धिः । द्विवचनाद्यसिद्धेः ॥ भाष्ये

यदि पुनरिति । (भा)

चतुर्थः पक्षः । षष्ठ्यर्थे सप्तमीति भावः ॥ तदाह

षष्ठीनिर्देशे त्विति । (कै)

[1]षष्ठ्यर्थकत्वे च निर्देश इत्यर्थः ॥ भाष्ये

एकविभक्त्यन्तानामिति त्विति । (भा)

एकग्रहणं कर्त्तव्यं भवतीत्यर्थः । प्रयोजनप्रश्ने तस्यैवोत्तरदानात् ॥

---

१ षष्ठ्यर्थकत्वेन । क ॥

---

तत्र ( २ । ४ । ६४ ) गोत्रस्य ग्रहणं न चैतल्लौकिकं गोत्रम् ॥ अथवा पुन-रस्त्वेका प्रकृतिर्बहुवचनस्य यञः । ननु चोक्तमसारूप्यादेकशेषो न प्राप्नोतीति । सिद्धं तु समानार्थानामेकशेषवचनात् । वा ॥ सिद्धमेतत् । कथम् । समाना-

---

तृतीयादौ विभक्तौ सारूप्यं तत्रैवैकशेषो न प्रथमाद्वितीययोरित्यर्थः । हरितेति । एषां प्रातिपदिकावस्थायां वैरूप्यमित्येकशेषो न प्राप्नोति विभक्तौ तु सारूप्यसद्भावात् सिध्यत्येकशेषः । हरितस्य स्त्रीति । नानेन पुंयोगः प्रतिपाद्यते तत्र हि ङीषा भाव्यं हरितीति किं तर्हि अयमर्थः हरितशब्दस्य हरिणी सा च स्त्री । न वेति । प्रातिपदिकग्रहणं विच्छिन्न-

---

प्रत्याख्यायतामिति वाच्यम् । प्रत्ययलक्षणेन तुगागमप्रातिपदिकसंज्ञा-द्यर्थं तदारम्भात् । तदेवं सरूपाणां विरूपाणां च सर्वमेकशेषं प्रत्याचक्षा-णेनापि भगवता सरूपसूत्रमात्रं तु शास्त्रीये व्यवहारे संज्ञापरिभाषादि-

न वेति। (भा)

प्रत्याख्यानमप्येकग्रहणस्यैव ॥

एकविभक्त्यन्तानामिति [1]न वक्तव्यमेवेति। (कै)

"न वेति" प्रतीकेऽस्यार्थस्योपयोगश्चिन्त्यः। यदि पुनः "प्रातिपदिकानामिति" प्रतीके त्विदं वक्तुं युक्तं "अयं तर्हि दोषः" इत्यग्रिमभाष्यस्वारस्येन तावत्पर्यन्तं

विभक्त्यन्तानामेकशेष इति (भा)

पक्षानुसृतेरेव लाभेन तथा व्याख्यानस्यानौचित्याच्च ॥

---

१ उपलब्धविवरणपुस्तके "एकविभक्त्यन्तानामिति न वक्तव्यमेवेति" इति प्रतीको दृश्यते। उपलब्ध कैयटपुस्तके तु "एकविभक्त्यन्तानामिति न कर्तव्यमेव" एवम्विधः पाठोऽस्ति॥

---

र्थानामेकशेषो भवतीति वक्तव्यम् ॥ यदि समानार्थानामेकशेष उच्यते कथम् अक्षाः पादाः माषा इति। नानार्थानामपि सरूपाणाम्। वा ॥ नानार्थानामपि सरूपाणामेकशेषो वक्तव्यः ॥ एकार्थानामपि विरूपाणाम्। वा ॥

---

त्वादिह नानुवर्तेत। सारूप्यं चेहाश्रीयते। न च प्रातिपदिकानि लोके प्रयुज्यन्ते किं तर्हि पदान्येव। शास्त्रेऽपि प्रत्ययाद्युपदेशेनानुमेयत्वात् प्रातिपदिकानां प्रयोगाभावः। तेन पदावस्थायां शाङ्गमानार इति वैरूप्या-देकशेषाभावः। हरिणाविन्यादौ तु भवतीति दोषप्रतिविधानं कृतम्। अपर आहेति। पक्षासम्भवप्रतिपादनार्थमिदमुक्तमित्यर्थः। इदानीं

---

बहूनामपि सहविवक्षामेकशेषं विधातुं भविष्यतीत्याशयेन "द्विर्बहुनेऽस्ती"-(१।१।५६) अत्र एकशेष इति भाष्येऽभिहितमिति दिक्। आरम्भ-

विप्रतिषिद्धावेताविति । (भा)

कर्तृसंप्रदानयोरर्थयोर्विरोधेन युगपदेकरूपेणैकवाच्यत्वाभावेन सहविवक्षाभावादेकशेषाप्राप्तेरेकत्वेन विभक्तिर्न विरोध्येत्यर्थः । कैयटोक्तं "ब्राह्मणेभ्य इत्युक्ते" इत्यादि तु वचनलोपवचनविधिकरणेऽपि एकशेषणवैयर्थ्योपपादकमिति बोध्यम् ॥ भाष्ये

अनेकमर्थम् (भा)

इत्यस्य युगपदेकरूपेणेत्यादिः ॥

अयं तर्हीति (भा)

प्रतीके

एकविभक्त्यन्तानामिति

क्रियमाणे प्रत्युतदोष इति (कै)

व्याख्यानं भाष्याक्षरस्वरसविरुद्धम् उक्तदोषाभावेऽपि अयं दोष इत्यर्थस्तदक्षरमर्यादया लभ्यते ॥

---

एकार्थानामपि विरूपाणामेकशेषो वक्तव्यः । वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ कुटिलदण्डाविति वा ॥ स्वरभिन्नानां यस्योत्तरस्वरविधिः । वा ॥

---

भाष्यकार एनं पक्षं समर्थयितुमाह । यथातेनेति । विभक्तिः सारूप्येणेति । एकविभक्तिर्नैकशेषनिमित्तत्वेनेहोपात्ता किं तर्हि सारूप्योपलक्षणार्था एकविभक्तौ लौकिके प्रयोगे यानि सरूपाणि दृष्टानि तेषामेकशेषः स चानैमित्तिकत्वाद्विभक्तिं नापेक्षते भाष्ये प्रातिपदिकग्रहणा-

---

भावे तु सूत्रे यद्यपि षट्पक्षाः सम्भवन्ति तथापि तत्र त्रयो दुष्टा एव । त्रयाश्च निर्दोषा इत्यवधेयम् । तथा हि । पृथक् सर्वेभ्यो विभक्तौ परत-

द्विवचनेति । (भा)

शिष्टस्य विभक्त्यन्तत्वयाऽप्रातिपदिकत्वेन द्विवचनाद्यप्राप्तेः (अप्राप्ते । क ।) चापि (वाच्यः । इ ।) वाच्येत्यर्थः ॥ द्वितीयपक्षादिशेषं दर्शयितुमाह

एकेति ॥ (कै)

प्रातिपदिकानामिति । (भा)

अनुवृत्तस्य बहुवचनेन विपरीणाम इत्यर्थः । यद्यपि विभक्त्युत्पत्तेः पूर्वं सरूपाणामेकशेष इत्यर्थे भाष्यतात्पर्य्ये प्रातिपदिकग्रहणानुवृत्तेः फलं चिन्त्यम् । तथापि हरित हरिणेत्याद्यग्रिमवार्त्तिकोत्थानाय तथोक्तम् ॥

---

स्वरभिन्नानां यस्योत्तरस्वरविधिस्तस्यैकशेषो वक्तव्यः । अत्स्वात्त्व अत्तौ (३ । १ । ३ ॥ ६ । १ । १९७) । मीमांसकश्च मीमांसकश्च मीमांसकौ (६ । १ । १९७) ॥ इह कस्मान्न भवति । एकश्चैकश्च द्वौ च द्वौ चेति ।

---

स्योपलक्षणार्थत्वाद् इत्रावकादीनामपि हरिणादीनामेकशेषो भवति । स्वरभिन्नानामिति वचनात् ङीबन्तस्य हरिणीशब्दस्य शेषः । येत्वाहुर्हरितहरिणयोरेवैकशेषे कृते उभयवाचित्वेऽप्यन्यतरस्य वर्णवाचित्वं जातिवाचित्वं वाश्रित्य स्त्रीप्रत्ययः क्रियत इति तेषां पक्षे स्वरभेदप्रसङ्गः । मातृमाषो.स्तु क्व चित्साहृप्येऽप्यर्थ.वप्रतिषेधादेकशेषाभावः ।· यत्र वेति । अनेकार्थैनिमित्तिकत्वमेव प्रतिपाद्यते । विभाग इति । कर्मादिकारकमिह विभक्तिशब्देनोच्यते तेन हि प्रातिपदिकार्थो विभागेनावस्थाप्यते । तत्र

---

एकशेषः । एकवचनान्तानां चाकृतद्वन्द्वानां वा समुदायादेकविभक्तौ वा युगपदधिकरणवचने वा अनेकनिमित्तिको वेति षट्पक्षाः । तत्राद्ये एकशब्दः समानपर्य्यायस्तथा च वृक्षस् वृक्षस् इति स्थिते संयोगान्तस्य पदान्तस्य

कृदन्तत्वादिति। (कै)

अतिङीति प्रतिषेधस्तु तिङ एव स्थानिवत्त्वप्राप्त्या[1] कृत इति अभिमानः। भाष्ये

मातृमात्रोरिति। (भा)

प्रातिपदिकयोरनयोः सारूप्यादिति भावः। इदं मात्रादी-नामुपलक्षणम्॥

यावतैकशेषेणेति। (कै)

जनन्यादिवाचकयोर्निषेधेऽपि शब्दपरयोर्विधे मानाभाव इत्यर्थः॥

---

१ कृतस्य। इ॥

---

संख्याया अर्थासंप्रत्ययादन्यपदार्थत्वाच्चानेकशेषः। वा॥ संख्याया अर्थासंप्रत्ययादेकशेषो न भविष्यति। न ह्येकावित्यनेनार्थो गम्यते। अन्य-पदार्थत्वाच्च संख्याया एकशेषो न भविष्यति। एकश्चैकश्चेत्यस्य द्वावित्यर्थः।

---

कस्मिंश्चित्कारके विवक्षिते तन्निमित्तया विभक्त्या भाव्यमित्येकविभक्त्यन्तानां सरूपाणामेकशेषः सिध्यति। कस्मिंश्चिदिति। अवस्थितस्य वचनस्य लोपो वक्तव्यः। तस्मिन्नपि कृते प्रत्ययलक्षणेन प्रत्ययान्तत्वात् प्रातिपदिकसंज्ञाया अभावाद् द्विवचनबहुवचने न सिध्यत इति ते अपि वक्तव्ये। न ङिसंबुद्ध्यो-रिति तु ज्ञापकं न लोपविषयमेवापि त्वविशेषेण लुप्तप्रत्ययस्य प्रातिपदिक-संज्ञायां ज्ञापकम्। एवमप्येकार्थत्वाच्छिद्यमानस्य द्विवचनबहुवचनासिद्धिरेव।

---

लोप इति व्याख्याने तु हल्ङ्यादिलोपः तथापि सुतिसीति प्रत्यये प्रकृतेराल्लोप इति पक्षे तु न कस्यचिल्लोपः। सर्वथापीष्टरूपं न सिध्यत्येव। आद्यन्तयोर्निवृत्तौ तुस् हृयस् इति स्यात्। परयोर्निवृत्तौ तु हृयस्

तदभाव इति। (कै)

विवक्षितार्थावगमायैकशेषो न कृत इति भावः। एवमेव "यत्तदेतेभ्य" इत्यादौ कोशेषु चैकशेषाकरणम्। तत्शब्द सूचिता स्वरसं स्पष्टयति

अर्थेति॥ (कै)

अर्थानवगतिरिति। (कै)

प्रकरणादिना प्रतीतिसम्भवाच्चिन्त्यमेतत्। एवं च विभक्त्यन्तानामेकशेषे तृतीयान्तादीनामेकशेषो भवत्येव। प्रथमा द्वितीययोस्तु नेतिमते दोषाभावात्। एकविभक्ताविति पदरहितप्रातिपदिकैकशेषपक्षे एवैष दोष इत्यर्थः भाष्यस्य विभक्तिपदाभावे सरूपाणा-

---

द्वौ च द्वौ च इत्यस्य चत्वार इत्यर्थः॥ नैतौस्तः परिहारौ। यत्तावदुच्यते संख्याया अर्थासंप्रत्ययादिति। अर्थासंप्रत्ययेऽप्येकशेषो भवति। तद्यथा। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ (१। २। ६५)। न चोच्यते वृद्धयुवानाविति

---

सहविवक्षायामिति। एवं चैकैकस्यानेकार्थाभिधानाद् द्विवचनबहुवचनान्तानामेवैकशेषः। न तर्हीति। नित्यैकशेषेण भवितव्यमिति वाक्यं न प्राप्नोतीत्यर्थः। इतरो भिन्नार्थत्वाद् एकशेषकृत्या वाक्यं न बाध्यत इत्याह। नैतदिति। प्रत्येकमत्र विवक्षेत्यर्थः। बाधास्तु प्रक्रियावाक्येनैव व्युत्पाद्यन्त इत्याह। अथापीति। यथाजातीयकानामिति। द्रव्यवाचिनामित्यर्थः। एकाहीति। आख्यातवाच्या क्रिया सर्वैवनिवृत्तभेदा प्रतीयते। भवद्भिरा-

---

इति स्यात्। तथा वृक्षा अनित्या इत्यादावन्तसुप्रत्ययश्रवणं स्यादिति दुष्ट एव प्रथमः पक्षः। द्वितीये वृक्षस् इति सविभक्तिकस्यावस्थानात्। द्विवचनबहुवचनयोरनुत्पत्तिरेकवचनश्रवणं च स्यात्। तृतीये द्वन्द्वे इति

नैवैकशेष इत्येवं नियमेन प्राप्तेः[1]। मातृभ्यां कृतं देहीति च यथा भज्यन्तामित्यादिवत्॥ "अयमतम्" इत्यनेनाह्वविवक्षैर्बोधिता। तद्वीजं तु सूत्रव्याख्यानपक्षभेदेन लक्ष्यभेदानौचित्यमिति। तस्माद्विभक्त्यन्तानामेकशेषेऽपि "मातृमात्रोः प्रतिषेधो वक्तव्य" (भा) एवेति गूढ़तात्पर्य्यम्॥ तद् ध्वनयन्नाह

एवं च कृत्वेति। (भा)

एवमङ्गीकृत्यप्रातिपदिकानामेकशेषे एव प्रतिषेधस्योच्यते इत्यर्थः। वस्तुतो विभक्त्यन्तानामेकशेषेऽपि तद्वक्तव्यमित्यर्थः। अस्य मतस्य

---

१ प्रतिषेधेन सह विवक्षाविषयैकशेषस्यनिषेधे तद्विषये द्वन्द्वः पक्षे वाक्यं च सिध्यति। असहविवक्षाविषयतन्त्रं तु भवत्येव। इत्यस्ति क पुस्तके॥

---

भवति चैकशेषः। यदप्युच्यतेऽन्यपदार्थत्वाच्चेति। अन्यपदार्थेऽप्येकशेषो भवति। तद्यथा। विंशतिश्च विंशतिश्च विंशती इति। तयोश्चत्वारिंशदित्यर्थः॥ एवं तर्हि नेमौ पृथक्परिहारौ। एकपरिहारोऽयम्।

---

स्यात इत्यादौ वस्तुस्थित्याकर्तृभेदाद् भेदेऽपि तिङन्ताद् भेदस्यानवगमात्। प्रकर्षाभ्यावृत्त्यादयस्तु भेदनिबन्धना आश्रयप्रकर्षाभ्यावृत्त्यादिभेदनिमित्ता नैकत्वं क्रियायां विघ्नन्ति। नैतानीति। कर्तृकर्मसमवेतसंख्याभिधायिनी द्विवचनबहुवचने इत्यर्थः। ननु कर्तृकर्मणोर्विधानादनेकस्मिन् कारके अनेकेनैव लकारेणोत्पत्तव्यम्। भवत्वनेको लकारः लकारजातेरथवधानाल्लस्येत्यत्र जात्याश्रयणादनेकस्यापि लस्य स्थाने अर्थतः आन्तर्याद् द्विवचन-

---

अनुवर्त्य अभिमतवाक्यार्थो यद्यपि लब्धुं शक्यते तथापि अश्व अश्व औ इति स्थिते विभक्त्यपेक्षाच्छेषात् पूर्वमन्तरङ्गत्वात् समासान्तोदात्ते कृते यदि पूर्वशेषस्तर्हि सर्वानुदात्तं पदं स्यात्। परशेषे तु अन्तोदात्तं स्यात्।

भाष्याभिप्रेतत्वे तु "विरूपाणामनेकशेष" इत्यादिप्राग्भाष्यविरोध इति दिक् ॥ तद्ध्वनयन्नाह

अभ्युपगम्यवादेनत्विति॥ (कै)

सर्वदेति। (कै)

सर्वत्र इत्यर्थकम् ॥ अत्रैव पक्षे दूषणान्तरमाह

हरितेति। (भा)

लिङ्गविशिष्टपरिभाषामनाश्रित्येदम् ॥

सा च स्त्रीति। (कै)

एवं [१]"वर्णादनुदात्तात्" इति ङीप्प्रकारौ॥ ननु लौकिकप्रयोगे सरूपत्वेऽप्येषां प्रातिपदिकाद्यभावात् कथमेकशेषसिद्धिरत आह

---

१ अ ४। पा १। सू ३९॥

---

संख्याया अर्थासंप्रत्ययादन्यपदार्थत्वाच्चेति। यत्र ह्यर्थासंप्रत्यय एव वान्य-पदार्थतैव वा भवति तत्रैकशेषो गार्ग्यौ विंशती इति यथा॥ अथवा नेम

---

बहुवचने भविष्यत इत्यदोषः। सुप्त्वगतौयस्त्रेति"। अवयवानां समुदायार्थ-तन्त्रत्वात् समुदायविभक्त्यैवावयवार्थस्य संख्यावगमात् पृथगवयवेभ्यो विभक्ति-र्नोत्पद्यते विरूपसमुदाये तु सुबन्तानां द्वन्द्ववचनेनायं न्यायो बाध्यते इत्यवयवेभ्य एव विभक्त्युत्पत्तिः। सुबन्तानामिति। यद्यपि गतिकारकोप-पदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरित्युच्यते तथापि पूर्वपदं तत्र सुबन्तमेवेति सोऽपि तदपेक्षया सुबन्तानामेव समासः। अन्यथा

---

इष्यते तु आद्योदात्तम्। अग्नेः क्निप् व्युत्पादनात्। "योऽग्नेभिर्वर्धते विभवो यज्ञ" इत्यादौ तथैव प्रयोगाच्च। किं च ऋक् च ऋक् च ऋगावित्यान्तरङ्गत्वाद् "ऋक्पूर" (५। ४। ७४) इति समासान्ते

## प्रातिपदिकग्रहणमिति । (कै)

तदननुवृत्तौ लौकिके प्रयोगे सरूपाणामित्युक्तेऽपि अन्तरङ्गत्वादेकशेषप्रवृत्तिर्विभक्त्युत्पत्तेः पूर्वमेवेति । सुप्प्रकृतीनामेवैकशेषसिद्धिरिति भावः । लौकिकप्रयोगस्य येषामेकशेषस्तत्प्रकृतिकविभक्त्यन्त एव प्रत्यासत्तेः । एतेन हरिणीशब्दस्यापि तत्प्रकृतिकतद्धितघटितप्रयोगे वैरूप्यमस्त्येवेति परास्तम् ॥ नन्वन्यत्र १"तरप्तमपौ घ" इत्यादौ लौकिकासंभवे शास्त्रीयग्रहणस्योक्तत्वादत्रापि तथैवास्त्वित्यत आह

## शास्त्रेऽपीति । (कै)

लौकिकतादृशप्रयोगत्वावच्छेदेन च सारूप्यं विवक्षितं तदाह

---

१ अ १ । पा १ । सू २२ ॥

---

एकशेषशब्दाः । यदि तर्हि नेम एकशेषशब्दाः समुदायशब्दास्तर्हि भवन्ति । तत्र को दोषः । एकवचनं प्राप्नोति । एकार्था हि समुदाया

---

नलोपादीनि पदकार्याणि पूर्वपदेन स्युः । उत्तरपदमेव तु तत्रासुबन्तम् । इह राजन् राजन् औ इति स्थिते परत्वान्नित्यत्वाच्चोपधाया दीर्घे कृते वैरूप्यादेकशेषो न प्राप्नोति । उच्यते । विरूपाणामपि समानार्थानामिति भविष्यति अन्तरङ्गत्वाद्वा । दीर्घत्वं हि नान्तरङ्गम् । उपधां विभक्तिविशेषमसंबुद्धिसर्वनामस्थानमपेक्षत इति बहिरङ्गम् । सर्वत्रेति । षट् पञ्च इत्योपश्लिष्टाः पृथग्विभक्तौ परत एकशेषः । एकवचनान्तानां वा

---

कृते विभक्तेरकारेण व्यवधानादेकशेषो न स्यात् । समासान्तो हि समासभक्तस्तमेव न व्यवदध्यात् । सरूपं तु व्यवदधात्येव । समासार्थोत्तरपदस्यावयव इति भाष्यमतेऽपि विरूपत्वादेकशेषो दुर्लभः । विरूपाणा-

तेनेत्यादि ॥ (कै)

पक्षासंभवेति। (कै)

लौकिके प्रयोगे सरूपाणामित्युक्ते प्रातिपदिकैकशेषस्योक्तिसम्भव एव न किन्तु विभक्त्यन्तानामेकशेष इति पक्षस्यैवापत्तिरिति भावः ॥

अथानेनेति। (भा)

यद्यनेन पक्षेण प्रयोजनं स्यात्तदा सोऽपि समर्थयितुं शक्यम् इति शेषः ॥ अपर आह

वाढमर्थ इति ॥ (भा)

स एवाह

किं वक्तव्यमिति। (भा)

प्रातिपदिकानामेकशेष इति सूत्रं कर्त्तव्यं चेत्यर्थः ॥

---

भवन्ति। तद्यथा। यूथम् शतम् वनमिति। सन्तु तर्ह्येकशेषशब्दाः। किं कृतं सारूप्यम्। अन्योऽन्यकृतं सारूप्यम्। सन्ति पुनः केचिदन्येऽपि शब्दा येषामन्योऽन्यकृतो भावः। सन्तीत्याह। तद्यथा। माता पिता

---

समासादैकस्यां विभक्तौ परतः सरूपसमुदायाद्वा विहितायामेकविभक्तौ परतः प्रातिपदिकानां वा सहविवक्षायां प्रत्येकं द्विवचनबहुवचनान्तानामिति। तत्र पश्चिमं पक्षत्रयमङ्गीकृतम्। तत्र भिक्षा भिक्षा भिक्षा आम् स इति स्थिते सर्वविधिभ्यो लुग्विधेर्बलवत्वाद् लुकि कृते विभक्त्यभावादेकविभक्तौ परतो विधीयमान एकशेषो न प्राप्नोति प्रत्ययलक्षणं च नास्ति

---

मपि समानार्थानामिति तु यद्यपि प्राप्नोति तथापि पक्षे ऋच इत्यस्य शेषे टापि ऋचे ऋचा इत्याद्यपि स्यात्। एवं पथा पथौ इत्याद्यपि पक्षे

सारूप्येणेति । (भा)

तेन स्वोपलक्षकतया विभक्तिराश्रीयते इति भावः ॥

ये त्वाहुरिति । (कै)

प्रातिपदिकग्रहणं चोपलक्षणमिति भावः ॥

हरितहरिणयोरिति । (कै)

विभक्तौ यानि सरूपाणि दृष्टानि तदवयवप्रातिपदिकानामित्यर्थ इति भावः ॥

अन्यतरस्येति । (कै)

शिष्टस्यान्यतरस्योभयवाचित्वेनेत्यर्थः ॥

जातिवाचित्वं चेति (कै)

चकारघटितः पाठः ॥

---

भ्रातेति ॥ विषम उपन्यासः । सकृदेते शब्दाः प्रवृत्ता अपायेष्वपि वर्त्तन्ते । इह पुनरेकेनाप्यपाये न भवति चत्वार इति ॥ अन्यदिदानीमेतदुच्यते सकृदेते शब्दाः प्रवृत्ता अपायेष्वपि वर्त्तन्ते इति । यत्तु भवानस्मांश्चोदयति

---

न लुमताङ्गस्येति प्रतिषेधात् प्रातिपदिकैकशेषपक्षे समर्थं यद्‌द्व्याप्-प्रातिपदिकं तस्मात्तद्धिता इत्याधन्तादधि कृते परत्वादादिवृद्धौ कृतायां वैरूप्यादेकशेषाप्रसङ्गः । यदा तु सहविवक्षायां विभक्त्यन्तानामेकशेषः सुबन्ताच्च तद्धित इत्ययं पक्षस्तदा सुबन्तसमुदायात्तद्धिताभावात् पूर्वमेकशेषः पश्चात्तद्धित इति न कश्चिद्दोषः । प्रातिपदिकानां चेति । अनेमि-

---

स्यात् । अपि च करौ करा इत्यादि न सिध्येत् । प्राण्यङ्गानां समाहार एवेति नियमात् । अपि च सर्वेषामित्यादौ "द्वन्द्वे च" (२ । २ । २८)

क्वचित्सारूप्ये इति। (के)

वस्तुतस्तु विभक्तित्वावच्छेदेन सारूप्यविवक्षणान्न मातृमात्रादौ दोष इति बोध्यम्। एकशब्दस्वारस्येनैव एकापकर्षणेन चैकस्यामपि विभक्तौ यानि विरूपाणि इत्यर्थात् इति दिक्॥ एकग्रहणफलं तु चिन्त्यमेव। अत एव पृथक् सर्वासां विभक्तीनामेकशेष इति पक्षे एकग्रहणं पृथक् विभक्तिप्रतिषेधार्थमित्युक्तम्। तेन हि तदतिरिक्त-पक्षेषु तद्वैयर्थ्यं ध्वनितं तत्पक्षेऽपि न वार्थविप्रतिषेधादिति तत् प्रत्याख्यातमेव। अथापि विभक्तिः सारूप्येणाश्रीयत इत्येवोक्तं न

---

सन्ति पुनः केचिदन्येऽपि शब्दा येषामन्योऽन्यकृतो भाव इति तत्रैते-ऽस्माभिरुपन्यस्ताः। तत्रैतद्भवानाह सङ्घदेते शब्दाः प्रवृत्ता अपायेष्वपि वर्तन्त इति। एतच्च।

एकैको गोयुक्तं भारं प्राप्नोति यत्कथं तत्र।
एकैकः कर्ता स्यात् सर्वे वा स्युः कथं युक्तम्॥
कारणमुद्यमनं चेन्नोद्यच्छति चान्तरेण तत्तुल्यम्।
तस्मात् पृथक् पृथक्ते कर्तारः स व्यपेक्षात्तु॥

---

सकृत्वादन्तरङ्गत्वात् पूर्वमेकशेषः पश्चाद्वृद्धिरथवा तद्धित एव पश्चादुत्प-द्यत इति भावः। बहवस्त यञ इति। प्रत्ययार्थशब्दनिवेशाद् बह्वपत्येषु बहवो यञ उत्पाद्याः। तत्र गर्ग य य य इति स्थिते समुदायस्य तद्धिता-न्तत्वात् प्रातिपदिकत्वात्तत एका विभक्तिस्तत्र प्रथमस्य यशब्दस्य प्रकृति-सन्निपातकृतं वैरूप्यमित्येकशेषो न प्राप्नोति। ननु प्रकृतिं विहाय

---

"विभाषा जसि" (१। १। ३२) इति प्रवर्तेत। अत एव विरूपैक-शेषो न क्रतवन्तानां तेषामित्यादौ "त्यदादीनि सर्वैः" (१। २। ७२)

त्वेकविभक्तिरिति ॥ न चैवं नृणां नृणामित्यादावेकशेषानापत्तिः । दीर्घस्य वैकल्पिकत्वेन सारूप्यनियमाभावादिति वाच्यम् । विरूपाणामपि समानार्थानामिति सिद्धेः । यत्त्वेकग्रहणसामर्थ्येन यद्विभक्तिविषये एकशेषस्तस्यामेव सारूप्यमित्यर्थात् । तृतीयादौ मातृमात्रोरेकशेष सिद्धिरिति तन्न । वार्त्तिककारं सर्वत्र प्रतिषेधेन पचयोः फलभेदापत्तेरित्यलम् ॥ भाष्ये

किं वक्तव्यमिति । (भा)

एकविभक्तीनामिति षष्ठ्यन्तं वक्तव्यं किमित्यर्थः ॥

तेन हीति । (कै)

बाहुलकात्करणसाधनः । कारकशक्तिवाचीविभक्तिशब्द आश्रीयत इति भावः ॥

---

प्रथममध्यमोत्तमानामेकशेषोऽसरूपत्वात् । वा ॥ प्रथममध्यमोत्तमानामेकशेषो वक्तव्यः । पचति च पचसि च पचथः । पचसि च पचामि च

---

यच्छब्दानां सारूप्यादेकशेषो विधास्यते । नैतदस्ति । विभक्त्युत्पत्तावभ्यन्तरीकृताप्रकृतिर्विभक्तिलक्षितसारूप्याश्रये एकशेषे कथं हातुं शक्यते । न च यणां प्रकृत्यर्थानपेक्षः समुदायार्थः तत्कथं प्रकृतिर्वर्ज्येत । यदापि सह-विवक्षायां विभक्त्यन्तानामेकशेष इति पक्षः तदा गर्ग य अस् य अस् य अस् इति स्थिते पूर्वस्य य अस् शब्दस्य प्रकृतिसन्निपाताद्वैरूप्यं प्रातिपदिकैकशेषपक्षेऽपि तथैव वैरूप्यमित्येकशेषो न प्राप्नोति । एवं प्रकृतयोऽपीति । एकैकस्यापत्यस्य प्रकृत्यर्थेन योगात् प्रधानभेदे च गुणस्याहत्या

---

इत्येकशेषे सर्वनामत्वाभावप्रसङ्गात् तदेवं त्रयः पक्षा दुष्टा एवेति स्थितम् ॥ विग्रहास्तत्र त्रेधा । तथा हि । राम राम राम इत्यत्रावयवानामिव

## विवक्षिते इति । (कै)

अनेन सूत्रेऽपि विषयसप्तमीति दर्शितं कारकशक्तेः शब्दात् परत्वासम्भवात् इति बोध्यम् ॥

## लुप्तप्रत्ययस्येति । (कै)

बहुव्रीहिः ॥

## एकार्थत्वाच्छिष्यमाणस्येति । (कै)

न च शिष्यमाणं लुप्यमानार्थाभिधायीति न्यायविरोधः । प्रत्येकपर्याप्तैकत्वविशिष्टानामेव शिष्यमाणशब्दबोध्यतया द्वित्वादिविशिष्टार्थाप्रतीत्या द्विवचनाद्यसिद्धिरिति भावः ॥

## एवं चैकैकस्येति । (कै)

युगपदधिकरणवचनताश्रयेणेति भावः । सर्वेषामर्थानां सर्वैः शब्दैः युगपद्बोधनेच्छा हि सह विवक्षेति तात्पर्य्यम् ॥

---

पचावः । पचति च पचसि च पचामि च पचामः । किं पुनः कारणं न सिध्यति । असरूपत्वात् ॥ द्विवचनबहुवचनाप्रसिद्धिश्चैकार्थत्वात् । वा ॥

---

गार्ग्यशब्दानामेवैकशेषः क्रियत इत्यर्थः । यञञोर्बहुष्विति । यदा यञामेवैकशेषः क्रियते तदा शिष्यमाणो यञ्शब्दो बहुषु वर्त्तत इति लुक् सिध्यति गार्ग्यशब्दानां त्वेकशेषे यञ्शब्दो बहुषु न वर्त्तते किं तर्हि यञ्शब्दान्त इति लुङ् न सिध्यति । यञन्तं यदिति । तेनैव चेत् कृतं बहुत्वमित्यपि तदन्ते नेति व्याख्यायते । काश्यपा इति । एकस्मिन् काश्यपापत्येऽञि कृते

---

समुदायस्याप्येका प्रातिपदिकसंज्ञा तावदस्ति । मिलितेन अर्थवत्त्वात् । न चार्थवत् समुदायानां समासग्रहणं नियमार्थमित्युक्तेः कथमेतदिति वाच्यम् ।

**भिन्नार्थत्वादिति। (वै)**

सर्वेषामर्थानां सर्वैः शब्दैः साहित्येनार्थप्रतिपादनविवक्षाभावादिति भावः ॥

**इत्याहेति। (वै)**

इत्याशयेनाहेत्यर्थः ॥

**अथापीति। (भा)**

निदर्शयितुमित्यनेन च वक्ष्यमाणस्यासाधुत्वं बोधितम्। यथा वा लौकिकविग्रहवाक्येनासाधुनापि समाससंज्ञाप्रवृत्त्यानिदर्शनं तथानेनापीत्यर्थः ॥

**द्रव्यवाचीनामिति। (वै)**

सत्ववाचिनामित्यर्थः ॥ ननु कर्त्रादिभेदात् क्रियाभेदावगमेनैका क्रिया इत्यनुपपन्नमत आह

---

द्विवचनबहुवचनयोश्चाप्रसिद्धिः। किं कारणम्। एकार्थत्वात्। एकोऽयमवशिष्यते तेनानेन तदर्थेन भवितव्यम्। किमर्थेन। यदर्था एकः। किमर्थ-

---

तत्प्रतिकृतिबहुत्वे काश्यपशब्दानामेकशेषे कृते अणन्तं बहुषु वर्तत इति लुक् प्रसङ्गः। लौकिकस्येति। अपत्यस्येत्यर्थः। न चैतदिति। प्रतिकृतिरूपितत्वान्नैतदणन्तमपत्यवाचि। एका प्रकृतिरिति। प्रकृत्यर्थस्यैकत्वात् तेन च बहूनामप्यपत्यानां सम्बन्धसम्भवात्। सिद्धं त्विति। सत्यपि प्रकृतिसन्निपातकृते एकस्य वैरूप्ये सर्वेषां प्रकृत्यर्थविशिष्टापत्याभिधायित्वात्

---

नियमस्य सजातीयविषयकत्वेन यत्र समुदाये पूर्वो भागः पदम् तत्रैव प्रवृत्तेः। अत एव बहुपटव इत्यत्र प्रातिपदिकत्वं भवत्येव इत्युक्तं "अर्थवत्"-

### आख्यातेति । (कै)

शब्दशक्तिस्वभावादिति भावः ॥ सर्वैव सर्वापि निवृत्तभेदात् (भेदाः । इ ।) स्वतोद्वित्वादिसंख्यारहिताभेदस्य तत् सहचरितद्वित्वादेः स्वगतमेकत्वं तु प्रतीयत इत्येकवचनमिति भावः ॥

### प्रकर्षाभ्यावृत्त्यादयस्त्विति । (कै)

अभ्यावृत्तिरत्र गणनम् ॥

### [1]आश्रयाभ्यावृत्तीति ।

आश्रयप्रकर्षात् प्रकर्षः । अभ्यावृत्तिर्जन्म तत् गणनमेव क्रिया-गणनमिति भावः ॥

### [2]एकत्वं न विघ्नन्तीति । (कै)

---

१ उपलब्ध कैयटपुस्तके तु "आश्रयप्रकर्षाभ्यावृत्ती"ति पाठोऽस्ति ॥

२ "नैकत्वं क्रियायां विघ्नन्ति" इत्युपलब्ध कैयटेऽस्ति ॥

---

स्वैकः । एक एकार्थः ॥ नैकार्थ्यम् । नायमेकार्थः । किं तर्हि । द्व्यर्थो बह्वर्थश्च । नैकार्थ्यमिति चेदारम्भानर्थक्यम् । वा ॥ नैकार्थ्यमिति चेदेक-

---

समानार्थत्वमस्ति । वक्रदण्डश्चकुटिलदण्डश्चेति द्वन्द्वनिवृत्त्यर्थमेतद्वक्तव्यं तेनै-वाग्रो बहुष्वित्यपि पक्षे आश्रीयमाणे इष्टं सिध्यति । यदात्वनन्तं यद्बहु-ष्वित्याश्रीयते तदाऽव्यभिचारन्यायाश्रयणात् वक्रदण्डश्च कुटिलदण्डश्चेति वाक्य-मेव भवति न तु द्वन्द्व इति न वक्तव्यो विरूपाणामेकार्थानामेकशेषः । स्वरभिन्नानामिति । स्वरेण भिन्नानामित्यर्थः । अक्षश्चेति । एकोऽक्षशब्दोऽश्ने-र्देवन इति सप्रत्ययान्तत्वादन्तोदात्तः । द्वितीयस्तु घञन्तत्वादाद्युदात्तस्तस्यैव

---

( १ । २ । ६५ ) सूत्रे । तथाच एकाज्द्विर्वचनन्यायेन समुदायप्रातिपदि-कादेव द्विवचनबहुवचनयोरुत्पत्तिः । तावताप्यवयवानां संख्यान्वयेनानुग्रह-

द्वित्वादिप्रतीतौ हि उत्तरस्य पूर्वसङ्ख्याबाधनात् तद्रहिति (तद्रहितः) स्यादिति भावः ॥

## कर्तृकर्मेति। (कै)

अध्यारोपितेत्यादिः ॥ भाष्ये साधनशब्देन तिङ्वाच्याभिधेय-कर्तृकर्मगतसङ्ख्याविशेष उच्यते। तदपेक्षापि। तदारोपापेक्षापि। एवं [1]चैकस्मिन्नेव तदारोपात्तपदभेदप्रसंग इति [2]नैकशेषस्यात्र विषय इति भावः ॥

## अनेकेनैवेति। (कै)

[3]"वर्त्तमाने लट्" इत्यत्र सङ्ख्याविवक्षणेऽपि [4]धातुभेदेन

---

१ कस्मिन्नेव। ङ॥ २ नैकशेषस्यात्रविषय इति भावः। क। ङ।
३ अ ३। पा। सू १२३॥ ४ धातुभेदे च। ङ॥

---

शेषारम्भोऽनर्थकः स्यात्॥ इह हि शब्दस्य स्वाभाविकी वाऽनेकार्थता स्याद्वाचनिकी वा। तद्यदि तावत् स्वाभाविकी। अशिष्य एकशेष

---

शेषो भवति एको मीमांसकशब्दो ण्वुलन्तत्वान्मध्योदात्तः परन्तु मीमांसामधीते इति क्रमादिभ्यो वुन्नित्याद्युदात्तस्तस्य शेषः। एकस्येति। द्वन्द्वोऽप्यनभिधानान्न भवति। अर्थासंप्रत्ययादिति। यद्येकः शब्दोऽनेकमर्थमभिधातुं शक्नोति तद्येकशेषो नान्यत्र। प्रयुक्तानामन्वाख्यानात्। एकाविति चोक्तेऽसहायादिरर्थो गम्यते न तु द्वावित्यर्थः। अन्यपदार्थत्वाच्चेति। असंदिग्धेन पदान्तरेणायमर्थः प्रत्याय्यत इत्यर्थः। गार्ग्याविति। गार्ग्यश्च

---

सम्भवात्। तथाच समुदायादेकविभक्तौ परत एकशेषः। रामकृष्णावित्यादौ तु यद्यप्युक्तरीत्या समुदायादेकविभक्तिः। प्राप्ता तथापि द्वन्द्वविधावनेक

वाक्योपप्लववत् कर्तृरूपार्थभेदेनापि वाक्योपप्लवादनेकप्रवृत्तौ दुर्वारः। अत एवाग्रे एकप्रकृतेरनेकशत्रुत्पत्तिं भाष्यकृद् वक्ष्यति ॥

## जात्याश्रयणादिति। (कै)

जात्याश्रयानेकव्यक्त्याश्रयणादित्यर्थः ॥

## अर्थतः आनन्तर्यादिति। (कै)

द्व्यर्थस्य शब्दस्य द्विवचनं बह्वर्थस्य समुदायस्य बहुवचनमिति भावः ॥ केचित्तु अनेकशकारोत्पत्तौ न मानं कर्तृत्वारोपवत् एकस्मिन्ननेकार्थत्वस्याप्यारोपात् इत्याहुः। एवं चानवकाशत्वादेकशेषो द्वन्द्वबाधक इति स्थितम्। भाष्ये "अथवा पुनरि"त्यादिना समुदायादेकविभक्ताविति पक्षः समर्थ्यते ॥

## समुदायविभक्त्यैवेति। (कै)

---

एकेनोक्तत्वात्। वा ॥ अस्मिन्नेकशेषः। किं कारणम्। एकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यमुक्तार्थानामप्रयोग इति ॥

---

गार्ग्यश्चेत्यस्याप्यर्थस्य संभवात् संदेहादर्थासंप्रत्ययः। उत्तरकालं तु प्रकरणादिवशात् संदेह निवृत्तिः ॥

ननु "वृद्धो यूने"ति वचनात् सन्देहेऽप्येकशेषः स्यात् अस्य तु निःसन्देहविषयसम्भवात् कथं सन्दिग्धविषये प्रवृत्तिः। नैतदस्ति। अक्षादिष्वपि सन्देहविषयेऽस्य प्रवृत्तिदर्शनात्। एवं तर्हीति। अर्थासम्प्रत्यये सत्यन्यपदार्थत्वादित्ययं हेत्वर्थः। यदि तर्हीति। प्रत्यर्थं शब्दनिवेशादेकशेषे सति

---

सुबन्तमित्यस्यानुवृत्त्या बाध्यते। अस्मिन् पक्षे मातृमात्रोरपि एकशेषः प्राप्तः। एकविभक्तावित्यस्यानुवृत्त्या एवकारस्य चानुकर्षणेन एकविभक्तौ

अवयवारब्धत्वात् समुदायसङ्ख्यायाः समुदायगतसङ्ख्याभिधायि समुदायविभक्त्यैवावयवार्थेऽपि तत्सङ्ख्याप्रतीतेर्गतार्थत्वान्नावयवेभ्यः पृथग् विभक्तिप्रसङ्ग इति भावः ॥ अवयवानां पदत्वादिरूपो यकारस्य समुदायविभक्त्याऽसम्भवाच्चिन्त्यमिदम् । किञ्च विशेष्यविभक्त्याविशेषणीय[1]सङ्ख्यादीनामुक्तावपि विशेषणाद् यथा साधुत्वाय विभक्तिः क्रियते तथाचापि दुर्वारेति । तस्मात् प्रत्येकगतसङ्ख्याया अविवक्षणान्न प्रत्येकं सुबुत्पत्तिः समुदायगतबहुत्वसङ्ख्याया एव विवक्षणेन तद्बोधकसमुदायादेव विभक्तिस्तावतापि "अपदं न प्रयुञ्जीत" इति निषेधातिक्रमाभावादिति भाष्यार्थः । प्रत्येकसङ्ख्याविवक्षाभावेऽपि बहुत्ववत्त्वेनविवक्षणात् पृथक् प्रयोगार्हत्वमप्येषां नेति । भेद-

१ "सङ्ख्यादीनाम्" इत्यारभ्य "प्रत्येकगत" इत्यन्तं नास्ति ङ पुस्तके ॥

अथ वाचनिकी तद्वक्तव्यमेकोऽयमवशिष्यते स च द्व्यर्थो भवति बह्वर्थश्चेति । न वक्तव्यम् । सिद्धमेकशेष इत्येव । कथं पुनरेकोऽयमवशिष्यत इत्यनेन

एकस्यानेकार्थत्वं सम्भवति । यदा तु समुदायवाचित्वं द्व्यादीनामभ्युपगम्यते तदा वनादिवदेकवचनप्रसङ्गः । यत्तु वनानीति बहुवचनं तत्समुदायप्रचयविवक्षायां न त्ववयवभेदविवक्षायाम् । समुदाया इति । समुदायवाचिन इत्यर्थः । किं कृतमिति । एकश्चैकश्चेति विग्रहे कथं द्विशब्दः प्रवर्त्तत इति प्रश्नः । अन्योऽन्यकृतमिति । परस्परापेक्षया द्वित्वोत्पत्तौ सत्यां प्रक्रियावाक्यमिदं भवति द्वौ च द्वौ चेति । तत्रैको द्विशब्दः शिष्यते ।

यानि ,सरूपाण्येवेति व्याख्यानान्न भवति । यदा युगपदधिकरणवचनतायां द्विवचनबहुवचनान्तानामेकशेषः । द्वन्द्वोऽप्येवम् । अजहत् स्वार्थायां हि वृत्तौ रामकृष्णावित्यादौ पूर्वपदमप्युभावभिधत्ते तावेवोत्तरपदमपि । न

संसर्गद्वारकमर्थवत्त्वमस्य नेति न नियमेन व्याप्तिरिति तात्पर्य्यम् ॥

तत्र सरूपसमुदायादेकविभक्तावेकशेषपक्षे दोषमुपपादयति

## तत्र भिक्षेति। (कै)

पदस्य विभज्यान्वाख्यानपक्षे इदम्। आबन्तसमुदायस्य चा-प्रत्ययान्तत्वात् प्रातिपदिकत्वमिति भावः ॥ "स्त्रीप्रत्यये चानुपसर्ज-नेने"ति तु स्त्रीप्रत्ययत्वेन तद्व्याप्यधर्मेण वा स्त्रीप्रत्ययग्रहणे इति तात्पर्यम् ॥

## तदासुबन्तसमुदायादिति। (कै)

तस्य सुबन्तत्वपर्य्याप्त्यधिकरणत्वाभावादिति भावः। एवं च भाष्ये "सर्वत्र" शब्देन पक्षद्वयमेव ग्राह्यमिति तात्पर्य्यम्। वस्तुतस्तु तद-वयवादेकस्मात्तस्य दुर्वारत्वेन तत्रकृते परत्वाद्दाद्विवृद्धौ वैरूप्यात्त-

---

द्व्यर्थता बह्वर्थता वा शक्या लब्धुम्। तच्चैकशेषकृतम् ॥ न ह्यन्तरेण तद्वाचिनः शब्दस्य प्रयोगं तस्यार्थस्य गतिर्भवति। पश्यामस्तु पुनरन्तरेणापि

---

मातेति। यथा सुतं जन्मनः प्रागलब्धमातृव्यपदेशं स्त्रीपश्चाल्लभ्यते एवं संख्येयान्तरापेक्षायां सत्यां पूर्वमप्रवृत्तो द्विशब्दः पश्चात्प्रवर्तत इत्यर्थः। अपायेष्वपीति। पुत्रविनाशेऽपि पितृव्यपदेशो न निवर्त्तते पितृविनाशे पुत्रव्यपदेशः। चतुर्णां त्वेकापाये नास्ति चतुःशब्दस्य प्रवृत्तिः। अन्यादि-दानीमिति। अवश्यं साधर्म्ये सति वैधर्म्येण भाव्यम्। अन्यथा तत्त्वमेव

---

चान्यतरवैयर्थ्यम्। परस्परसमभिव्याहारेणैवोभयार्थताध्यवसायात्। तथा च द्वन्द्ववृत्तेः प्रागेकैकार्थतावगमेऽपि वृत्तावुभयाभिधानात् प्रत्येकं द्विवच-नाद्युत्पत्तिः। एवमेकशेषवृत्तावपि परार्थाभिधानं वृत्तिरिति सिद्धान्तात्।

त्पक्षेऽप्येकशेषो न प्राप्नोति । न च विनिगमनाविरहेण प्रत्येकमुत्पत्तौ चतुष्टयापत्तिः । तावतापि च च भेदमित्यस्याप्यापत्त्या नियतभेदा-[1]विरुद्धत्वदवस्थत्वात् । किञ्च प्रातिपदिकानामेकशेषे विरुद्धमिति भाष्ये न्यूनताप्रत्येकं द्विवचनाद्यन्तानामेकशेष इति पक्षेऽपि तद्युक्त-रीत्या दोषाभावात् । युगपदधिकरणवचनतायां दुःखत्वदुरुपपादत्व-योर्द्वितीये भाष्ये वक्ष्यमाणतया [2]तत्पक्षोक्तिसत्त्वाभावाच्च । समर्थ-ग्रहणेन तु न विभक्तिनिमित्तकार्यस्य पूर्वप्रवृत्तिः । विश्वौह आगतं विश्ववाड्रूप्यमित्यादे "विभाषा पूर्वाह्णे"ति सूत्रभाष्यस्वारस्यात्या-पत्तेरित्याहुः ॥ प्रातिपदिकैकशेषपक्षे माषमाषादौ यथा नैकशेष-स्तथोक्तमेव ॥ भाष्ये

---

१ भेदाविरुद्धेस्तदावस्थत्वात् । ग ॥

२ तत्पक्षस्योक्ति— । क ॥ ३ अ ४ । पा ३ । सू २४ ॥

---

तदाचिनः शब्दस्य प्रयोगं तस्यार्थस्य गतिर्भवतीति अग्निचित् सोमसुदिति यथा । ते मन्यामहे नोपपन्नमेतद्येनाचान्तरेणापि तदाचिनः शब्दस्य

---

स्याद् न तु साधर्म्यम् । यत्र साधर्म्यं तत्र वैधर्म्योद्भावने न कश्चिदपि हेतुः स्यादित्यर्थः । माषादयश्च शब्दाः सम्बन्ध्यन्तरापेक्षयैकस्मिन् आश्रये वर्तन्त इति सम्बन्ध्यन्तरविनाशेऽपि आश्रयसद्भावायुक्तं यत्प्रवर्तन्ते द्यादयस्तु समुदायनिवेशिन एकापाये तत्समुदायाभावात् कथं प्रवर्तेरन् । एतच्च वार्त्तमिति । भा । एतद्युक्तम् । यदाश्रयसन्निधानादेकापायेऽपि माषादय-

---

तयः च रामश्च कृष्णश्चेति लौकिकवाक्यस्यादूरविप्रकर्षेण विग्रहतया प्रदर्शनेऽप्यलौकिकद्वन्द्वैकशेषयोः प्रक्रियावाक्ये राम औ कृष्ण औ इति प्रविशति । तथा च विभक्त्यन्तानामेकशेषोऽपि निर्बाध एव । अथवा

सिद्धमिति । (भा)

सुबन्तात् तद्धितोत्पत्त्या तत्पक्षे एकशेषस्यानारम्भात् । एवं च "सर्वत्र" इत्ययुक्तमिति भावः ॥ इदानीं तस्य सार्थक्यं दर्शयितुमपत्यार्थ एव पक्षद्वयेऽपि दूषणमाह

अपत्यादिष्विति ॥ (भा)

एका प्रकृतिरिति । (भा)

अर्थाभेदादभिन्नेत्यर्थः ॥

तद्धितान्तत्वादिति । (कै)

अपत्यशब्दस्यापि गर्गादिविशिष्टत्वेन समुदायस्य तद्धितान्तत्वादिति भावः ॥

प्रकृतिसन्निपातेति । (कै)

---

प्रयोगं तस्यार्थस्य गतिर्भवतीति । एवमिहाप्येकशेषकृतमेतद्येनायमेकोऽयमवशिष्यत इत्यनेन द्व्यर्थता बह्वर्थता वा भवति ॥ उच्येत तर्हि न तु

---

तदपेक्षाः प्रवर्तन्ते इत्यर्थः । इदानीमेतद्वैधर्म्यरहितं द्वितीयं दृष्टान्तं व्याचष्टे । एकैक इति । भा । यथोद्यन्तृणां परस्परसन्निधिकृतं कार्त्स्न्यमेकैकापाये च निवर्तते तथा द्व्यादिव्यपदेशोऽपीत्यर्थः । कथं तर्हीति । भा । व्याप्यमित्यध्याहारः ॥ एकैक इति । भा । कार्त्स्न्यमेकैकापाये परस्परनिरपेक्षमित्यर्थः । कारणमुद्यमनं चेदिति । भा । कार्त्स्न्यप्रतीतावित्यर्थः । कार्यकल्पितत्वात् शक्तीनामेवमुक्तम् । तत्तुल्यमिति । भा ।

---

उपक्रम एव यथा व्याख्यातं तन्नीत्या अनैमित्तिक एवैकशेषः । तथा च पक्षत्रयं स्थितं सिद्धान्ते । अत्रेदमवधेयम् । उक्तपक्षत्रयमध्येऽपि समुदायादेकविभक्ताविति पक्षस्तावद्दुष्ट एव । मातृमातारावित्यत्राति-

तत्र प्रथमस्य सान्निध्यात् सन्निपातोऽन्यस्तु व्यवहितत्वान्नास्तीति वैरूप्यमिति भावः ॥

### अभ्यन्तरीति । (कै)

गार्ग्यशब्दविशिष्टयशब्दद्वयस्य प्रातिपदिकत्वे तदर्थगतसङ्ख्याभिधायितया प्रवृत्ता विभक्तिः सारूप्योपलक्षणतायां प्रकृतिं न त्यजतीत्यर्थः ॥

### न च यञामिति । (कै)

यञ् समुदायस्येत्यर्थः ॥

### समुदायार्थः । (कै)

अपत्यसमुदायरूपोऽर्थः । अपत्याद्यर्थस्य सम्बन्धिकत्वादिति भावः ॥

---

गम्येत । यो हि गामश्व इति ब्रूयादश्वं वा गौरिति न जातुचित् संप्रत्ययः स्यात् । तेनानेकार्थाभिधाने यत्नं कुर्वतावश्यं लोकः एष्टतोऽनुगन्तव्यः ।

---

तेनोच्चन्तातुल्यम् द्वितीयमुच्चन्तारमन्तरेणेत्यर्थः । अथवा तत्तुल्यमिति द्व्यादिशब्देषु अप्येतत्तुल्यमित्यर्थः । प्रथमेति । भा । एकस्मिन् पुरुषे क्रियाया एकत्वान्नास्त्येकशेषः पुरुषभेदेन तु प्रत्यक्षपरोक्षादिभेदे विरोधात् क्रियाया अनेकत्वादेकशेषो वक्तव्यः । कृतेचैकशेषे प्रकरणादिवशादर्थविशेषावसायः । यदा तु युष्मदस्मदी एवानेकार्थाभिधानसमर्थे इति पक्षः । अत्रापि च निवृत्तभेदाया एव क्रियाया आख्यातेनाभिधानं तदैकशेषो न

---

प्रसङ्गं वारयितुम् एकविभक्तावित्यस्य सरूपाणामित्येतद्विशेषणतया आवश्यकत्वे स्थिते एकशेषविशेषविशेषणत्वायोगात् । आवृत्तौ मानाभावात् फलाभावाच्च । न च पयः पयो जरयतीत्यादिव्यावृत्तिः फलम् । सहविव-

## तदा गर्ग येति । (कै)

प्रत्येकं तद्भिन्नान्तत्वात् सह विवक्षायां प्रत्येकं बहुवचनमिति भावः ॥

## प्रधानभेदे च गुणावृत्त्येति । (कै)

प्रातिपदिकोद्देशेन तद्विधानात् प्रातिपदिकार्थस्य तत्र विशेषणत्वाद् गुणता । किं चैकस्मात् अनेकेषां परत्वासम्भव इति भावः ॥

## यञ्यो बहुष्विति (भा)

भाष्ये तेनैवेत्यनुवृत्त्या प्रत्ययस्यैव बहुषु वृत्तेर्लुगभ्युपगम इति भावः ॥

## यदा यञामेवेति । (कै)

उक्तरीत्याद्योपपत्तिश्चिन्त्या । लुक् शास्त्रवैयर्थ्यापादानमेवात्र भाष्यकृत् तात्पर्य्यविषयीभूतम् ॥

---

केष्वर्थेषु लौकिकाः काञ्शब्दान् प्रयुञ्जत इति । लोके चैकस्मिन् वृक्ष इति प्रयुञ्जते द्वयोर्वृक्षाविति बहुषु वृक्षा इति । यदि तर्हि लोको-

---

वक्तव्यः । द्विवचनेति । भा । प्रत्यर्थं शब्दनिवेशे एकैकः शब्दः एकैकार्थाभिधायीति सह विवक्षायां निवृत्तेषु शब्दान्तरेषु शिष्यमाणेन शब्देन तस्मिन्नेवैकस्मिन्नर्थे अवस्थेयमिति भावः । सर्वेषु पक्षेष्वयं दोषः प्रातिपदिकैकशेषे द्विवचनबहुवचनानुत्पत्तिप्रसङ्गः । विभक्त्यन्तानां विभक्तौ वा परत एकशेषेऽर्थाभावाद्द्विवचनबहुवचनयोर्निवृत्तिप्रसङ्गः । अथ स्वभावतः शिष्य-

---

माणायामित्यस्य द्वन्द्वप्रहणबलेनावश्यवाच्यत्वात् । अन्यथा पयः पयो नयतीत्यत्र गौणमुख्यकर्मणोरेकशेषापत्तेः । देवदेव इत्यादावति प्रसङ्गाच्च । प्रत्युत आवृत्त्योभयविशेषणत्वे भैक्षमिति न सिध्येत् । तथा हि । भिक्षा २ आम्

## अपत्यवाचीति । (कै)

यद्यपि प्रकृतिनिवृत्ते ( प्रकृतिवृत्त्येतत् । द्र ) तत् गोत्रमेव नेति

## लौकिकस्येति (भा)

विशेषणं व्यर्थं तथापि सिद्धान्तस्वरूपप्रदर्शनमेतत् । यद्वा तत् सदृशत्वात् तत्रापि गोत्रत्वाभिमानः । प्रवराध्यायप्रसिद्धं हि तत्र गोत्रशब्देन गृहीतमित्युत्तरम् ॥

## सम्बन्धसम्भवादिति । (कै)

प्रधानानुरोधेन गुणावृत्तिन्यायस्तु यत्र गुणावृत्तिं विना प्रधानोत्पत्तेर्न निर्वाहस्तव्यत्तव्यानीयरादौ तद्विषय इति भावः ॥ इह तु यत्रा ( यत्रा । द्र ) कृतेरेकत्वाद्बहूनामपि परत्वसम्भवाद् गुणावृत्तिर्नोपेक्ष्येति तात्पर्य्यम् ॥

---

ऽवश्यं शब्देषु प्रमाणां किमर्थमेकशेष आरभ्यते । अथ किमर्थं लोप आरभ्यते । प्रत्ययलक्षणमाचार्यः प्रार्थयमाणो लोपमारभत एकशेषारम्भे

---

माणोऽनेकार्थः किमेकशेषेण । वाचनिको वेति । भा । यद्यपि सर्वमेव स्वाभाविकं तथापि यत्र प्रयोगविप्रयोगौ दृश्येते तत्र विप्रयोगनिवारणाय यदुच्यते तद्वाचनिकमभिधीयते । स च ह्यर्थं इति । भा । सरूपाणामेकशेषोऽनेकार्थश्च एकविभक्ताविति वक्तव्यमित्यर्थः । सिद्धमिति । भा । एकशेषारम्भसामर्थ्यादयमर्थो गम्यते प्रियमाणः शब्दोऽनेकार्थाभिधायीति । एकेन ह्यनेकार्थाभिधानायैकशेषः क्रियते । एकार्थाभिधाने तु

---

ष इति स्थिते "अन्तरङ्गानपि विधीन् बहिरङ्गोऽपो"ति लुकि कृते लुका लुप्ते प्रत्ययलक्षणविरहादेकशेषो न स्यात् तथा युगपदधिकरणवचनतापक्षोऽपि दुर्बलः । महत् स्वार्थायां वृत्तौ तदयोगात् । तथा च द्वितीये

समानार्थत्वमिति । (कै)

नन्वेवं कदाचिद्द्विशब्दमात्रस्य शेषप्रसङ्गः । तथा सति प्रकृत्यर्थविशिष्टप्रत्ययार्थानवगतिप्रसङ्गात् । न चानड्वाहावित्यादौ अस्मिन्पक्षेऽनेनैवैकशेषसिद्धिः । अपरः सरूपाणामित्यस्य स्थाने समानार्थानामितिमत्वाऽव्याप्तिमाह भाष्ये

यदीति ॥ (भा)

नानार्थानामपीति । (भा)

सूत्रमपि क्रियत इति भावः ॥

तेनैवाप्यो बहुष्विति । (कै)

"तेनैव ( तेनैक । इ ) विरूपाणामपी"ति वचनेन वस्तुतः तेन

---

पुनरस्य न किंचित्प्रयोजनमस्ति ॥ ननु चोक्तं प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानमिति । यदि चैकेन शब्देनानेकस्यार्थस्याभिधानं स्यात् न प्रत्यर्थं

---

अनेकशब्दाप्रसङ्गादनर्थक एकशेषः स्यात् इत्यर्थः ॥ इतर एतत्सामर्थ्यमजानन्नाह कथमिति । भा ॥ तच्चैकशेषकृतमिति । भा । एकशेषविधानेनैतत्प्रतिपादितमित्यर्थः । अनेनेति । भा । एकशेषविधानेन । उच्येत इति । भा । वचनादनेकार्थकार्याणि प्रवर्त्तन्तां यथा "जात्याख्यायामेकस्मिन्" इति । न त्वेकार्थः शब्दः एकशेषविधानेनानेकार्थः सम्पद्यत इत्यर्थः । गामश्व इति । भा । अश्वधर्मसमारोपः केवलं प्रतीयते न तु तात्त्विकमश्वत्वमित्यर्थः । यदि तर्हीति । भा । यदि च लोकः प्रमाण-

---

भाष्यम् । सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा चेति । तच्च तत्रैव स्फुटीकरिष्यामः । तस्मात् प्रागुक्त सटपञ्चीमध्येऽनैमित्तिकत्वपक्ष एव प्रबलः । इतरे पक्षापि हेया इति तदभिप्रायकतयैव सूत्रं व्याख्यातम् ।

गर्गयशब्दस्य शेष इति तस्यैव लुप्यमानार्थाभिधायित्वमित्यपापि पक्षेऽन्तवद् बहुष्वित्यर्थेनैव लुगितिकेचित् ॥

अव्ययविकेति । (कै)

मन्दबुध्यनुग्रहाय तु कार्य्यमेव वार्त्तिकं सूत्रजातवत् ॥ ननु बहुव्रीहौ निष्ठान्तत्वाद्भिन्नस्य पूर्वनिपातः स्यादत आह

स्वरेणेति । (कै)

साधनं कृतेति समासः ॥

घञन्तत्वादिति । (कै)

अनुव्याप्ताविति भ्वादिप्रकृतिकेत्यादिः ॥ अनभिधानस्यावश्याश्रयणीयतां दर्शयति

---

शब्दनिवेशः कृतः स्यात् ॥ प्रत्यर्थं शब्दनिवेशादेकेनानेकस्याभिधानादप्रत्यर्थमिति चेत्तदपि प्रत्यर्थमेव । वा ॥ प्रत्यर्थं शब्दनिवेशादेकेनानेकस्याभि-

---

मित्यर्थः। उच्यते तर्हि अतः प्रभृति सर्वो ग्रन्थ एकशेषप्रत्याख्यानवादिनः । तदपि प्रत्यर्थमेवेति । भा । अर्थो ह्यभिधेयमुच्यते यस्य द्व्यर्थः शब्दो नासौ द्व्यर्थतां जहाति बह्वर्थस्य बह्वर्थतां रोदसी दारा इति यथेत्यर्थः। यावतामिति । भा । वृक्षश्च वृक्षश्चेति दर्शनादनारब्ध एकशेषे अनेकार्थता एकस्य न स्यात् । एकेनापीति । भा । सहविवक्षायामेक एव शब्द उद्भूतावयवभेदं समुदायमभिधत्त इत्यर्थः। प्लक्षन्यग्रोधाविति । भा । अत्रापि सहविवक्षायां समुदायार्थप्रादुर्भावादनेकेनैव समुदायस्य प्रति-

---

पचतीत्यादौ तु धातोर्द्वन्द्वादिप्रसक्तिरेव नास्ति यदाक्यशेषो मृग्यते । न च मिलिताद्लडादिप्रसङ्गः । धातोरित्येकत्वस्य विवक्षितत्वात् । न चैकस्मादेव कर्तृद्वये लट्द्वयं कर्तृबहुत्वे लकारबहुत्वं च स्यादिति वाच्यम् । इष्टापत्तेः ॥

द्वन्द्वोऽपीति । (कै)

सङ्ख्याशब्देष्वेकादिषु एकशेषमापादयतोऽयं भावः ॥ द्विपत्तुः शब्दादिभ्योऽनेकार्थाभिधानं घटादिशब्देभ्य इव न स्यादिति । अवश्यमेकशेषेणानेकार्थत्वं वक्तव्यमिति एकादिशब्दानामपि तत्प्रसङ्ग इति ॥ भाष्ये

अर्थो गम्यत इति । (भा)

द्वित्वरूपार्थ इत्यर्थः ॥

[१]द्वावित्यर्थ इति ॥

तस्य च द्वौ शब्दौ वाचक इति भावः ॥

सन्देहादिति । (कै)

---

१ स्त इति । क ॥

---

धानादप्रत्यर्थमिति चेदेवमुच्यते । यदप्येकेनानेकस्याभिधानं भवति तदपि प्रत्यर्थमेव । यदपि द्व्यर्थावर्थौ प्रति तदपि प्रत्यर्थमेव । यदपि द्व्यर्थानर्थान्

---

पादनात् द्वितीयस्य प्रयोगो न प्राप्नोतीत्यर्थः । अनुक्तत्वादिति । भा । द्यावित्युक्ते द्यस्य द्यान्तरेण सहत्वं गम्यते न तु न्यग्रोधेनेत्यर्थः । द्यावेति । भा । द्योशब्देन द्यावापृथिव्योरभिधानात् ततः परस्यौकारस्य "सुपां सुलुग्" (७।१।३९) इत्याकारः "गोतो णित्" (७।१।९०) इत्यो-कारान्तग्रहणासित्वाद् वृद्धिरावादेशश्च । पृथिवी इति । भा । द्विवच-नान्तं "वा छन्दसी"ति (६।१।१०६) पूर्वसवर्णदीर्घः । पृथिवीशब्देनाप्य दिव-

---

"लस्य" (३।४।७७) इत्यजातिविवक्षया लद्वयस्य तसादयः बहूनान्तु झियादय इति सुवचत्वात् । वस्तुतस्तु "वर्त्तमाने लट्" (३।२।१२३) इत्यादौ व्यक्तिनिष्ठैकत्वस्य विवक्षणान्न कश्चिद्दोषः । अत एव वृत्तं वृत्तं

निश्चयात्मकप्रतीत्यभावोऽसम्प्रत्यय इत्यर्थः। न चोच्यते इन्द्र-युवानावित्यनेन सन्देहबीजं दर्शितम् एवं तर्हि नेमावित्यादि भाष्यस्य वाचकशब्दान्तरसत्ताविशिष्टार्थासम्प्रत्ययेनैकादि शब्दानामेकशेषा-भाव इत्यत्र तात्पर्य्यम्। विंशत्यादीनां तु भवत्येवेति दिक्॥ इदानीं तदयस्यमभिप्रेतं द्विशब्दादिरूपदृष्टान्तं खण्डयति

**अथवा नेम इति।** (भा)

द्वावित्यादय इत्यर्थः। तेषामेकशेषशब्दत्वे हि तद्दृष्टान्तेनाप्येक-शेषापादानं नत्वेते तथेति भावः॥

**यदात्विति।** (कै)

एकशेषं विनैवेत्यर्थः॥ ननु समुदायो नामार्थः। न च तस्यार्थो-ऽस्तीत्यत आह

---

प्रति तदपि प्रत्यर्थमेव॥ यावतामभिधानं तावतां प्रयोगो न्याय्यः। याव-तामर्थानामभिधानं भवति तावतां शब्दानां प्रयोग इत्येष पक्षो न्याय्यः॥

---

स्पर्ययोरभिधानम्। विरूपाणामिति। भा। प्रकरणादिवशाच्चार्थ-विशेषावसायस्तत्र प्रवृत्तिनिमित्तभेदेऽपि विरूपोऽनेकार्थाभिधायी दृश्यते तत्र सरूपः कथं न स्याद्यत्रैकं प्रवृत्तिनिमित्तमित्यर्थः। तदेवं द्रव्याभिधान-पक्षेऽपि प्रत्याख्यायत एकशेषः। अनेकार्थप्रश्नमे अनेकार्थे एक एव द्वन्द्व-शब्दः प्रयुज्यते न तु द्वन्द्वः। अनभिधानात्। इदानीमाकृतिपक्षाश्रयेण प्रत्याख्यानं करोति। आकृत्यभिधानादिति। भा। जातिः पदार्थः तस्या

---

त्रिंशतीत्यादौ नानेकत्वाभिधानार्थं विभक्तिपरम्परा नेति दिक्। गर्गाविं-त्यादावपि पितुरेकत्वात् प्रकृतिरेका प्रत्ययास्तु बहवः। सर्वेषां प्रकृत्यर्था-न्वित्ताभिधायितया विरूपाणामपि समानार्थानामिति गर्गशब्दस्य

समुदायवाचिन इति ॥ (कै)

प्रश्न इति। (कै)

एकस्यैकस्येति विग्रहे ध्रियमाणद्विशब्देन किं सादृश्यमित्यर्थः ॥

परस्परेति। (कै)

एकशब्दयोः सहविवक्षायां ध्रियमाणैकशब्दस्यैतदर्थाभिधाना-
सामर्थ्यात्परस्परापेक्षयैकैकस्यार्थे द्वित्वोत्पत्तौ तदभिधानसमर्थशब्द-
प्रवृत्तिः। तदलौकिकं च द्वौ च द्वौ चेत्यादीति भावः। अन्यो-
ऽन्यापेक्षाकृतद्वित्वेन प्रत्येकं द्विशब्दप्रवृत्त्या सारूप्यमिति भाष्या-
क्षरार्थः। अत एवाग्रे अन्योन्यकृतभावविषय एव प्रश्नः। अन्योन्यकृत
इत्यस्य परस्परकृत इत्यर्थः॥ भावः प्रवृत्तिनिमित्तं मातृपुत्रादि-
शब्दाश्च परस्परकृतमातृत्वपुत्रत्वादिनिबन्धनाः। तदाह

---

यावतामभिधानं तावतां प्रयोगो न्याय्य इति चेदेकेनाप्यनेकस्याभिधानम्।
भा॥ यावतामभिधानं तावतां प्रयोगो न्याय्य इति चेदेवमुच्यते। एको-

---

एकत्वादनेकशब्दप्रयोगप्रसङ्ग एव नास्ति किमेकशेषेणेत्यर्थः। कथं पुन-
रिति। भा व्यतिरेकेणाकृतेरनुपलम्भादभावं मन्यमानस्य प्रश्नः। प्रख्या-
विशेषादिति। भा। प्रख्याबुद्धिः तस्या अविशेषादेकरूपत्वात् तद्विषय-
स्याप्यैक्यं प्रतीयते। गुणप्रमाणादिभिन्नेष्वपि गोपिण्डेषु गौर्गौरित्येकाकार-
प्रत्ययोदयादवश्यमेकेनालम्बनेन सामान्येन भाव्यमिति जातिसद्भाव एकत्वं
चावसीयते। गौरित्युक्त इति। भा। गौरित्येतेन शब्देनोक्ते प्रत्यायिते

---

शेषः। न च पक्षे यच्छब्दमात्रस्यापि तदापत्तिः। विकल्पस्याष्टदोषदुष्ट-
त्वात्। न च विनिगमकाभावः। अणुदन्वीति न्यायेन स्पष्टप्रतिपत्ति-
सामर्थ्यस्यैव विनिगमकत्वात्। यद्वा। यञ्च इत्यपि व्यक्त्यैक्यं विवक्षितम्।

## यथेति॥ (कै)

## पुत्रविनाशेऽपीति। (कै)

ननु पुत्रस्य बुद्धिस्थत्वेन तन्नाशेऽपि पितृव्यवहारोऽस्त्येव भाविपुत्रस्य पितेति व्यवहारवत् प्रकृतेऽप्येकस्य बुद्धिस्थत्वे तदपायेऽपि चतुरादिव्यवहार इति। किं वैषम्यं पुत्रस्याबुद्धिस्थत्वे तु तत्सत्त्वेऽपि न पितृव्यवहार इति चेन्न नष्टस्य पितेति व्यवहारवत् नष्टबुद्धिस्थं पदार्थमादायैकस्य विद्यमानत्वे द्वौ स्त इत्यादिव्यवहाराभाव इति वैषम्यमित्याशयात्॥

## नास्ति चतुः शब्दस्येति। (कै)

एवं च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः॥ नन्वेवं परिहारे दृष्टान्तदार्ष्टान्तिकभावः क्वापि न स्यादित्याह

---

ऽपि न्याय्य एव यदप्येकेनानेकस्याभिधानं भवति। यदि तर्ह्येकेनानेकस्याभिधानं भवति। न्यग्रोधौ एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्नः।

---

सामान्यलक्षणेऽर्थे विशेषानवधारणादैक्यसामान्यस्यावसीयत इत्यर्थः। कुतश्चैतदिति। भा। भवतु सामान्यमेकं तस्य तु वाहदोहादिकायामर्थक्रियायामयोग्यत्वाद् द्रव्यस्यैव योग्यत्वादभिधानं न्याय्यमिति मत्वा प्रश्नः। अव्यपवर्गगतश्चेति। भा। अव्यपवर्गोऽभेदः अभेदः अविच्छेदः अविशेषस्तस्य गतिः प्रतीतिरित्यर्थः। जातौ चाभिधीयमानायां द्रव्यदारका वाहदोहादय उपपद्यन्ते जातितद्वतोश्चाभेदोपचाराद् गौः शुक्ल इति सामानाधिकर-

---

प्रतिप्रधानं च गुणावृत्तिः। गार्ग्यशब्दत्रयस्य चैकशेषः। उभयथा यञन्तं यञ्ञञोश्च इति लुक्। न चैवं काश्यपस्य प्रतिकृतिः काश्यपः। ततः प्रतिकृतीनां सहविवक्षायां काश्यपा इत्यत्रापि अजन्तं बह्वषु वर्तते इति लुक्

अन्यदिदानीमिति ॥ (भा)

तद्व्याचष्टे

अवश्यमिति। (कै)

एवं चेदृशेविषये वैधर्म्योद्भावनमकिंचित्करमिति भावः ॥

साधर्म्योत्पत्त्यपि उक्तवैधर्म्ये बीजमाह

माषादय इति ॥ (कै)

आश्रयसद्भावादिति। (कै)

सद्भावोऽत्र बुद्धिकृतः। तेन मृतामातेत्याद्युपपत्तिः ॥

समुदायेति। (कै)

इतरसाहित्यविशिष्टद्रव्यनिवेशिन इत्यर्थः ॥

---

एकेनोक्तत्वात्तस्यार्थस्यापरस्य प्रयोगेण न भवितव्यम्। किं कारणम्। उक्तार्थानामप्रयोग इति ॥ एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेद-

---

ण्यादिव्यवहारोऽप्युपपद्यते। अथ प्रख्याविशेषादप्यपवर्गगतस्वेति किमर्थमुभयोरुपादानम्। एकेनापि हेतुनैकत्वाभिधानयोः सिद्धत्वान्नैष दोषः। अनभिधीयमानापि जातिः संनिधिमात्रेण प्रख्याऽविशेषे निमित्तं भवतीति प्रख्याऽविशेषेण प्रत्यभिज्ञाप्रत्ययरूपेणैकत्वमेव प्रतिपादितं नाभिधानम्। तथा वनमिति सर्वविशेषाभ्यन्तरीकरणेनाप्यपवर्गगतावपि प्रख्याया अविशेषो नास्ति भिन्नवृत्त्यावलम्बनत्वाद्वनमिति प्रत्ययस्य। एकोपदिष्टमिति।

---

स्यादिति वाच्यम्। "यस्कादिभ्यो गोत्रे" (२। ४। ६३) इत्यतो गोत्र इत्यनुवृत्तेः। यद्यप्यपत्याधिकारादन्यत्र लौकिकं गोत्रं तथापीह ऋषिप्रजन एव गोत्रं विवक्षितमिति "स्त्रीपुंसाभ्यां नञ् स्नञौ" (४। १। ८७)

वार्त्तम् (भा)

इत्यस्यागारमित्यर्थ इत्यन्ये ॥ भाष्ये

यद् (भा)

इत्यस्य यचेत्यर्थः। सर्वे परस्परसापेक्षा इत्यर्थः॥ ननूद्यमनस्यैव कर्त्तृत्वप्रतीतौ कारणत्वात्तस्य च प्रत्येकवृत्तित्वादेकैक इत्येव युक्तस्त-(युक्तं। इ) त्राह

कारणमुद्यमनं चेदिति। (भा)

एकतुल्य द्वितीयसहायं विनाप्युद्यमनं स्यात्। न च तथा दृश्यते तस्मात् परस्परसापेक्षं पृथक् पृथक् कर्त्तृत्वमित्यर्थः। एवं च तत्र यथान्योन्यकृतेनोद्यमनकर्त्तृत्वरूपार्थेन प्रत्येकस्मिन् तेन सहउद्य-

---

नुक्तत्वात् प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः। वा॥ एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेदनुक्तः प्लक्षेण न्यग्रोधार्थ इति कृत्वा न्यग्रोधशब्दः

---

भा। एकस्मिन्नुपदिष्टं गौरयं त्वया पदा न स्प्रष्टव्य इत्यादि वस्तु। अथ वैक-मुपदिष्टं यस्य तदेकोपदिष्टं सकृदुपदिष्टं गोत्वादिसर्वत्रज्ञायत इत्यर्थः। उपोद्धलकमिति। भा। उद्भूतं वलं प्रत्यक्षं तत्पूर्वकत्वादनुमानस्य उद्बलस्य समीपमनुमानमित्यर्थः। प्रख्याविशेषादित्यनेन प्रत्यक्षं जात्या-लम्बनं प्रमाणमुपन्यस्तम्। ततो विप्रतिपन्नप्रतिपादनायानुमानमिह जाति-सद्भावे ज्ञायते च "एकोपदिष्टमि"त्यनेनोक्तं देशकालावस्थापिण्डान्त-रेष्ववाधितप्रत्यभिज्ञाप्रत्ययोदयान्यथानुपपत्त्या सामान्यसद्भावोऽनुमीयते

---

इति सूत्रे कैयटः। तेन पौत्रा दौहित्रा इत्यत्र न लुगित्यवधेयम्। एतेन संख्यया कर्मभेद इत्यस्य व्युत्पादनाय प्रवृत्ते पृथक्निवेशात् संख्यया कर्म-भेदः स्यादित्यधिकरणे सप्तदशप्राजापत्यानित्युदाहृत्य किं त्वयं तद्धिता-

च्छतीति शब्दस्तथान्योन्यसव्यपेचद्वित्वैकैकस्मिन्नपि द्विशब्दप्रवृत्ति-रिति सिद्धमेकशेषशब्दत्वं द्वौ च द्वौ च इति विग्रहः। द्वित्ववै-शिष्ट्येन बोधाच्च। प्रत्येकं द्विवचनं प्रयोगेत्वेकशेषेणैव प्रयोगाच्छक-द्वाभ्येकबोधो द्वावित्यतः। एवं चैको न द्वावित्याद्युपपन्नम्। द्वौ नैकस्त्रयो न द्वौ इत्येवं विधव्यवहारादुत्तरसञ्ज्ञायाः पूर्वसञ्ज्ञाबाध-कत्वमिति तत्त्वम्॥

अथवेति। (कै)

अत्र पचे॥

तत्तुल्यमिति। (भा)

स व्यपेचास्त्वित्युत्तरं योज्यम्॥

नोद्यच्छतिचान्तरेण (भा)

इत्यत्र स्वसमकचं सहायमिति शेषो बोध्यः। वस्तुतो द्व्यादी-नामेकशेषशब्दत्वाभावेऽपि नियमत उद्भूतावयवभेदसमुदायविवचणेन न कदाचिदपि द्व्यादिभ्य एकवचनम्॥

---

प्रयुज्यते। कथमनुक्तो यदिदानीमेवोक्तमेकेनाप्यनेकस्याभिधानं भवतीति। सरूपाणामेकेनानेकस्याभिधानं भवति न विरूपाणाम्॥ किं पुनः कारणं सरूपाणामेकेनाप्यनेकस्याभिधानं भवति न पुनर्विरूपाणाम्॥ अभिधानं

---

इत्यर्थः। 'अथवा वत्समुद्दीपयत्युपोद्बलकमुपष्टम्भकमुच्यते। धर्मशास्त्रं च तथेति। भा॥ अनेनैतद्दर्शयति। न सादृश्यैकार्थक्रियाकारित्वादिनि-मित्ता भ्रान्ता प्रत्यभिज्ञा सर्वत्रेति ग्राह्यं किं तर्हि अभिन्नविषयनिमित्तास्मृति-

---

न्तानामेकशेषः कृतो भवेत्। किं वा कृतैकशेषाणां पश्चात् तद्धितसङ्कृति-रिति वदतां भट्टानां प्रश्नोऽपि व्याख्यातः। ण्यप्रत्ययान्तानामेकशेषः।

अथवा नेमे इति (भा)

भाष्यस्यायमेवार्थः। एकशेषेणाऽप्ययमेवार्थः सूचितमिति ( सूचित इति । इ ) बोध्यम् ॥ भाष्ये

प्रथमेति । (भा)

[1]प्रथमे नमध्यमः प्रथमादिनोत्तम इति वक्तव्यमित्यर्थः ॥

पुरुषे । (कै)

प्रथमाद्यन्यतमे ॥

एकत्वादिति । (कै)

भेदावगमे हेतोरभावादित्यर्थः ॥

प्रत्यक्षम् । (कै)

अहंकारानास्पदचैतन्यम् ॥

पराक्षम् । (कै)

---

१ प्रथम मध्यमः । इ ॥

---

पुनः स्वाभाविकम् । वा ॥ स्वाभाविकमभिधानम् ॥ उभयदर्शनाच्च । वा ॥ उभयं खल्वपि दृश्यते । विरूपाणामप्येकेन अनेकस्याभिधानं भवति । तद्यथा । द्यावा ह क्षामा । द्यावा चिदस्मै पृथिवी नमेते इति । विरूपाणां

---

काराणामप्यविगीतप्रमाणभावस्मृत्युपनिबद्धवचनानां जात्याश्रयेण सर्वव्यवहारप्रवर्तनादित्यर्थः ॥ एवं ब्राह्मणमिति । भा ॥ एकस्यैव द्रव्यस्य ब्राह्मणशब्दवाच्यत्वादिति भावः ॥ तस्येति । भा ॥ अथ्यपवर्गगतिरभ्रान्ता । स्मृति-

---

ष्यप्रत्ययान्तानामेव वेति तदाशयात् । कृतैकशेषाणां प्रजापतिर्देवता येषामिति कृतैकशेषयच्छब्देनोपस्थापितानां तद्धितसङ्गतिस्तद्धितवाच्यता ।-

तद्दास्यद्दचेतमलम् ॥ "आद्दिना" प्रत्यक्षत्वपरोक्षत्वे ॥

प्रकरणादीति। (कै)

गार्ग्याविव्यत्र "वृद्धो यूनोरि"वेति भावः ॥

यदात्विति। (कै)

[1]"त्यदादीनी"त्येकशेषारम्भादिति भावः ॥

आख्यातेनाभिधानमिति। (कै)

प्रथमत इति शेषः। पश्चादित्वादिप्रत्ययः समभिव्याहारादिति भावः। एवं चेदं वचनमवैयाकरणतार्किकस्येति तात्पर्य्यम्। स्वरूप-व्याक्रियथैव चास्य प्रत्याख्यातप्रायत्वाद्द्विवचनाद्यसिद्धेश्च। नास्य विशिष्यप्रत्याख्यानं भाष्ये इति बोध्यम् ॥

असरूपत्वादिति। (भा)

---

[1] अ १। पा २ सू ७२ ॥

---

किल नामैकेनानेकस्याभिधानं स्यात् किं पुनः सरूपाणाम्॥ आकृत्यभि-धानादेकं विभक्तौ वाजप्यायनः। वा॥ आकृत्यभिधानादेकं शब्दं विभक्तौ वाजप्यायन आचार्य्यो न्याय्यं मन्यते। एकाकृतिः सा चाभिधीयत इति ॥

---

कारणामपि तथैव व्यवहारदर्शनादित्यर्थः॥ नन्वेकमनेकस्थं कथं भवति। न हि देवदत्तो युगपन्मथुरायां स्रुघ्ने च भवतीत्यत आह अस्ति चेति। भा। अवयवी यद्यप्यनेकावयवस्थः तथापि तत्सद्भावे विवादाभावो दृष्टान्त-

---

तथा च मिलितानां देवतासम्बन्धं बोधयितुं लौकिकविग्रहे येषामिति निर्देशः। इत्तौ तु देवतावद्वाचकस्य तद्धितस्यैकशेष इति मिलितेषु पशुषु

असमानशब्दत्वादसमानार्थत्वाच्चेत्यर्थः॥ द्विवचनेत्यादिग्रन्थस्तु वृत्तौ इत्याद्यभिप्रायकः सूत्रं प्रत्याख्यातुं

निवृत्तिप्रसङ्ग इति॥ (कै)

जातनिवृत्तौ मानाभावात् तत्त्वेऽपि तदर्थाभावेन तद्बोधप्रसङ्ग इति [1]वक्तुं

यद्यपीति। (कै)

शब्दार्थसम्बन्धस्य नित्यत्वादिति भावः॥

विप्रयोगः। (कै)

द्वन्द्वरूपः॥

एतत् प्रतिपादितमिति। (कै)

भाष्ये "कृतम्" इति [2]एकशेषविधानसामर्थ्यलब्धप्रतिपादने वर्त्तते तेन शब्दार्थसम्बन्धनित्यत्वेऽपि न क्षतिरिति भावः॥ लोपस्याभावात्मकत्वात् तत्कृतत्वमर्थावगतेरनुपपन्नमत आह

१ वक्तुं युक्तम्॥ इ॥ २ एकशेषविधानसामर्थ्याल्लब्धम्। क॥

कथं पुनर्ज्ञायत एकाकृतिः सा चाभिधीयत इति। प्रख्याविशेषात्। वा॥ न हि गौरित्युक्ते विशेषः प्रख्यायते शुक्ला नीला कपिला कपोतिकेति॥

त्वेनोपात्तः॥ इतीन्द्रवद्विषय इति। भा। एकस्याप्यनेक इति वाक्यशेषः। शब्दप्रादुर्भावेऽव्ययीभावे कृते वतिः प्रत्ययः॥ सर्वत्रेति। भा। सर्वेषु

देवतात्वयादेको यागः। अग्नीषोमीय ("अग्नीषोमीयं पशुमालभेत" "यणोऽग्नीषोमीयः" इत्यादिषष्ठाध्यायस्याष्टमे पादे नवमाधिकरणे

लोपद्वारेणेति । (कै)

एवं च श्रियमाणस्य लुप्यमानार्थबोधकत्वमनुभवमितिभावः ॥

भाष्ये

बह्वर्थता वा भवतीति । (भा)

वा चार्थे । क्वचित् चेत्येव पाठः । विद्यमानैव बोध्यते इत्यर्थः ॥

[1]एतदजानानः शङ्कते

उच्येत तर्हीति ॥ (भा)

तद्व्याचष्टे

वचनादिति । (कै)

शास्त्रस्य शास्त्रीयकार्य्यार्थत्वादिति भावः ॥

संप्रत्ययः स्यादिति । (भा)

भाष्ये शास्त्रत्वप्रमाणादित्यर्थः ॥ तर्हि शब्दस्य चार्थतया व्याख्याने मानं दर्शयति

---

१ एतदजानान इतरः । इ ॥

---

यद्यपि तावत्सङ्ख्याविशेषाज्जायत एकाकृतिरिति कुतस्त्वेतत् साभिधीयत इति । अव्यपवर्गगतेश्च । वा ॥ अव्यपवर्गगतेश्च मन्यामहे आकृतिरभिधीयत इति । न हि गौरित्युक्ते व्यपवर्गो गम्यते शुक्ला नीला कपिला

---

यागेषु द्रव्यवदङ्गतां प्रतिपद्यत इत्यर्थः ॥ एकशेषेऽपीति । भा । यद्येकस्या-नेकसम्बन्धो नाभ्युपगम्यते । तदैकः शब्दोऽनेकमर्थं सम्बन्धाभावान्न प्रत्याय-

---

द्रष्टव्यम्) इत्यादौ मिलितयोर्देवतायामभेदान्वये यथेत्युदाहृतवार्त्तिकस्यो-त्तरार्धेऽर्थोऽध्यवसेयः । युक्तं चैतत् । "प्रत्ययार्थबहुत्वं हि प्रत्यक्षमुपलभ्यते ।

सर्वो ग्रन्थ इति ॥ (कै)

भाष्ये

अथ किमर्थं लोप इति । (भा)

अग्निचिद् इत्यतो लोकत एव कर्त्रर्थे प्रतीतिसिद्धेरिति भावः ॥

प्रत्ययलक्षणमिति । (भा)

अनेन [1]लोपेनानुत्पत्तेरेवाऽऽख्यानमित्युक्तं न प्रत्यर्थमिति ततश्च वृक्षश्चेति वाक्यं न स्यादिति भावः ॥ इतराभिमतमनूद्य दूषयति

प्रत्यर्थम् (भा)

इत्यादि । प्रत्यर्थं शब्दनिवेशादेकेनानेकाभिधानाभावादेकशेष आरब्धव्यः । अन्यथाऽप्रत्यर्थं स्यात् । एकेनानेकस्याभिधाने प्रत्यर्थं शब्दप्रयोगो न स्याद् इति चेदित्यर्थः ॥

यद्प्येकेनेति । (भा)

---

[1] लोपेनानुत्पत्तेव । क ॥

---

कपोतिकेति ॥ ज्ञायते चैकोपदिष्टम् । वा ॥ ज्ञायते खल्वप्येकोपदिष्टम् । गौरस्य कदाचिदुपदिष्टो भवति । स तमन्यस्मिन् देशेऽन्यस्मिन् काले-ऽन्यस्यां च वयोऽवस्थायां दृष्ट्वा जानात्ययं गौरिति ॥ कः पुनरस्य विशेषः

---

येदित्यर्थः ॥ उक्तमेवार्थं समर्थयितुमाह "द्रव्याभिधाने ह्री"ति । भा । श्रुति-स्मृतिविहितानां सर्वव्यवहाराणामप्रवृत्तिः स्यादित्यर्थः । ननु चेति । सर्व-विषयाच्चेदाकृतिश्चोद्यते तदा सर्वव्यक्तिविषयमनुष्ठानं विना वैगुण्यमेव स्यादित्यर्थः । अथानुष्ठानसिद्ध्यर्थमेकद्रव्यविषयमेव कर्म क्रियते तत्राप्युच्यते

---

तत्कृतं चैकशेषत्वमिति न प्रकृतौ भवेद्" इत्युत्तरवार्त्तिकस्यानुगुण्यात् । स्यादेतत् । "प्रत्ययार्थस्यैकदेशे प्रकृत्यर्थो विशेषणम् । अभेदस्येह सम्बन्ध

अपिना एतत् सूचयति । नैकेनैकस्याभिधानं वयं निराकुर्मः । किन्तु बहुविवक्षायामेकेनानेकाभिधानमपि स्वीकुर्मः । तेन वाक्य-सिद्धिः । एकशेषारम्भश्च न कार्य्यः । द्वन्द्वस्य तु प्रयोगादर्शनात्तन्नि-वृत्त्यर्थोऽपि स इति । स्वीयस्वीयार्थत्याग एव प्रत्यर्थत्वमिति भावः ॥ आरम्भवाद्याह

यावतामिति । (भा)

एष एव न्याय्य इत्यर्थः ॥ न्याय्यत्वं कुत इत्यत आह

दृष्टश्चेति । (कै)

एकस्य न स्यादिति प्रयोगे इति शेषः ॥ प्रत्याख्यानवादी आह

एकेनेति । (भा)

वृक्षावित्यादिदर्शनादिति भावः ॥ आरम्भवाद्याह

यदीति ॥ (भा)

सहेति । (कै)

समुदायार्थप्रादुर्भावादिति भावः ॥ द्विवचनाद्युत्पत्त्यर्थमाह

उद्भूतेति ॥ (कै)

---

प्रख्याविशेषादित्यतः । तस्यैवोपोद्बलकमेतत् । प्रख्याविशेषाज्ज्ञायते चैकोपदिष्टमिति । धर्मशास्त्रं च तथा । वा ॥ एवं च कृत्वा धर्मशास्त्रं

---

"एकाकृतिरिति चे"ति । भा । च शब्दस्तु शब्दस्यार्थे वक्ष्यमाणार्थापेक्षया समुच्चये वा ॥ न चेदानीमिति । भा । एकत्वजातेरेकशब्दप्रवृत्तेः सिद्धत्वादेक-

---

नामेवादावियं स्थितिः" इति पक्षे देवतावतां साहित्यं लभ्यते न तु सहितानां देवतात्वे देवतायां प्रदेये च स्वशब्दः प्रतिक्रियत इति पक्षेऽपि

एकेनैवेति । (कै)

युगपदधिकरणवाचक इति रीत्येत्यर्थः ॥

पक्षान्तरेणेति । (कै)

सजातीयत्वाद् झटितिबुद्धिस्थेनेत्यर्थः ॥ भाष्ये

एकेनापीति । (भा)

अपिनानेकेनापि ॥ प्रत्याख्यानवाद्येव युक्त्यन्तरमाह

उभयदर्शनाच्चेति । (भा)

उभयोरप्येकेनानेकार्थाभिधानदर्शनादित्यर्थः ॥ तद्व्याचष्टे

सरूपस्य चेति ॥ (कै)

द्विवचनान्तमिति । (कै)

अत एव पदकाले पृथिवी इतीति प्रगृह्यत्वम् ॥ ननु द्यावा इत्यादाविव प्लक्षावित्यादावपि जाति अनेकार्थाभिधानं स्यादिति चेन्न स्वभावेन वारणात् ॥

यच्चैकं प्रवृत्तिनिमित्तमिति । (कै)

---

प्रवृत्तम् । ब्राह्मणो न हन्तव्यः सुरा न पेयेति ब्राह्मणमात्रं न हन्यते सुरामात्रं च न पीयते । यदि द्रव्यं पदार्थः स्यादेकं ब्राह्मणमहत्वैकां सुरा-

---

शेषारम्भः प्रत्याख्यायते अनेकत्वे तु आरब्धव्य एवैकशेष इत्यर्थः ॥ एवं तर्हीति । भा । सर्वाभिर्व्यक्तिभिः सम्बन्धस्य तुल्यत्वात् सर्वत्रैवाभिन्नबुद्ध्युत्पादनात् प्रत्येकं

---

एकप्रत्ययोपात्तदेवतान्वयस्यान्तरङ्गत्वादेवमेवेति चेत् सत्यम् । अदेय एव शक्तिः प्रकृतेस्तु प्रत्ययसमभिव्याहारात् देवतायां निरूढलक्षणात्वाश्रयेणार्थं

तत्र [1]शक्यतावच्छेदप्रकारकबोधाङ्गीकारे तदनुगतीकृतानेकव्यक्तिबोधो माय्य एव एकस्माद्द्रव्यपदार्थवादेऽपि शुद्धव्यक्तिबोध इति वादीनां मतेऽपि प्रवृत्तिनिमित्तोपलक्षितानेकव्यक्तौ शक्तिग्रहात्तात्पर्यग्राहकसत्त्वे एकस्मादप्यनेकशुद्धव्यक्तिबोध इति सर्वथा द्रव्यपक्षेऽपि सूत्रं प्रत्याख्यातम्॥ इदमेव तत्र यदेकस्य युगपदनेकार्थबोधकत्वं तदाह

**प्रत्याख्यानमिति। (कै)**

इदं च प्रत्याख्यानमर्थस्यान्यप्रमाणत्वादित्यनेन सूत्रकृतापि दर्शितप्रायमेव॥ नन्वेवमपि द्वन्द्वो दुर्वारोऽत आह

**न त्विति। (कै)**

सहविवक्षायामेकजातीयार्थानेकशब्दप्रयोगादर्शनेन तदसाधुत्वप्रतिपादनार्थसूत्रमिति भावः॥

**एकाकृतिरिति। (भा)**

भाष्यस्यास्तीति शेषः शब्दार्थः। शब्दप्रतीतिविशेष्यः बुद्धिरिति प्रमात्मिकेत्यर्थः॥ ननु व्यक्त्यैक्ये स्यादेव प्रतीत्येकरूपतेत्यत आह

---

१ शक्यतावच्छेदकप्रकारकः। क॥

---

मपीत्यान्यत्र कामचारः स्यात्॥ कः पुनरस्य विशेषोऽव्यपवर्गगतेश्चेत्यतः। तस्यैवोपोद्बलकमेतत्। अव्यपवर्गगतेश्च धर्मशास्त्रं च तथेति॥ अस्ति चैक-

---

परिसमाप्तत्वादेकस्मिन्नपि द्रव्ये तत्कर्मक्रियमाणं जातौ कृतमेव भवतीत्यर्थः॥ यथादित्य इति। भा। प्रतिदेशं यथा सर्वात्मनादित्य उपलभ्यते तथा

---

ग्रन्थो नेयः। "केवलाद्देवतावाची तद्धितोऽग्नेः समुद्धरन्" इत्यादिग्रन्थास्तु मतान्तराभिप्रायेण नेयाः। न चैवमपि विरूपैकशेषपक्षे समानार्थता-

गुणेति ॥ (कै)

आलम्बनेनेति । (कै)

विषयेणेत्यर्थः ॥

प्रत्यायित इति । (कै)

अनेकशोऽपीत्यादिः ॥

विशेषानवधारणादिति । (कै)

आश्रयभेदेऽपीत्यादिः ॥ अविच्छेदं व्याचष्टे

अविशेष इति ॥ (कै)

तस्य गतिरिति । (कै)

विशेषानवगतिपूर्वसामान्यस्य शब्दतोऽवगतिरित्यर्थः । अयं भावः । शुक्लादिभिन्नेष्वनुस्यूतैकाकारप्रतीत्या जातिसिद्धौ तत्र शक्तिग्रहः शब्दात्तस्यावबोधश्च व्यक्तीनां त्वानन्त्यात् तासु न शक्तिग्रहो नापि शुद्धानां तासां बोधस्तासां विशेषरूपत्वेन विशेषावगतिप्रसंगात् । यथाकृतिरूपादिकं शाब्दबोधे भासते सामान्येन तथा विशेषेऽपि भासेत । जातेः शक्यत्वे तु तदाश्रयत्वेनाक्षेपा-

---

मनेकाधिकरणस्थं युगपत् । वा । अस्ति खल्वप्येकमनेकाधिकरणस्थं युगपदुपलभ्यते । किम् । आदित्यः । तद्यथा । एक आदित्योऽनेकाधि-

---

जातिरपीत्यर्थः ॥ ननु चेति । भा । द्रव्येऽपि पदार्थे जातेरनभिधेयाया उपलक्षणत्वेनाश्रयणात् परित्यक्तमेतं द्रव्यमात्रं विशिष्टजातियुक्तं शब्देनो-

---

त्राभार्थं प्रकृत्यर्थान्वयस्य प्राथमिकत्वं स्वीकार्यमेवेति वाच्यम् । यत्र च द्वयोरेकविभक्तिं प्रति प्रकृतित्वाभावेऽपि विभक्तौ परतः सारूप्यसत्त्वेन

दिना सामान्याकृतिरूपादेरेव ग्रहणमिति न दोषः। प्रथमतो बालस्य यद्यपि विशेषरूपेणैव शक्तिग्रहस्तथाप्यावापोद्वापन्यायेन व्यक्त्यन्तरे आनयनादिदृष्ट्वा पूर्वज्ञातशक्तिग्रहस्य जात्याश्रयमात्रे व्यवस्थितिरिति तत्त्वम्॥ वाचादिक्रिया तर्हि कथमत आह

## द्रव्यद्वारका इति॥ (कै)

## आश्रये च इति।

आश्रये करणमेव जातौ तत्करणमिति भावः॥ अन्वयबोधे तु बाधज्ञानस्याप्रतिबन्धकत्वाच्च तदनुपपत्तिः। जातीत्यादिप्रयासो वृथेति कश्चित्॥

## संनिधिमात्रेण। (कै)

शक्तिग्रहे व्यक्ता उपलक्षणतामात्रेण प्रत्यभिज्ञाप्रत्ययरूपेण प्रत्यभिज्ञाविषयेण प्रत्ययेन तदुच्चारितगोशब्दाद्यादृशः प्रत्ययस्ता-दृश एवैतदुच्चारितादित्येवं प्रत्यभिज्ञाविषयता सा चैकाकारतां विनानुपपन्नेति। द्वितीयेनाभिधाने सिद्धेऽपि एकत्वं न सिध्य-तीत्याह

---

करणानो युगपदुपलभ्यते॥ विषम उपन्यासः। नैको द्रष्टादित्यमनेकाधि-करणस्थं युगपदुपलभते॥ एवं तर्हि। इतीन्द्रवद्विषयः। वा॥ तद्यथा।

---

च्यते॥ प्रत्येकं च परिसमाप्यते इति। भा। शास्त्रमित्यध्याहारः। अथवा जातिरूपलक्षणभूता प्रत्येकं परिसमाप्यत इति व्याख्येयम्॥ एकशेषस्व-

---

सरूपैकशेष एवेत्याशयात्। प्रकृतमनुसरामः। स्वरभिन्नानां यस्योत्तरः स्वरविधिः स शिष्यत इति वक्तव्यम्। तेन पूर्वोदाहृते हरिण्याविव्यत्र

तथा वनमिति ॥ (कै)

अविशेष इति । (कै)

एकरूपत्वमित्यर्थः ॥ वनशब्देन कदाचिदाम्रसमुदायस्य कदाचित्पलाशसमुदायस्य कदाचित् खदिरसमुदायस्य कदाचिद्धवादिसमुदायस्य प्रतीतेरिति तात्पर्य्यं तदाह

भिन्नहष्टेति ॥ (कै)

एकत्वे युक्त्यन्तरमाह

ज्ञायते चैकेति ॥ (भा)

आद्यव्याख्यानेऽध्याहारभयाद्भाष्यकारस्याशयमाह

अथवेति ॥ (कै)

उपदिष्टमिति । (कै)

भावे क्त इत्यर्थः ॥ भाष्ये

कः पुनरिति । (भा)

अनेनापि प्रत्याख्यानविशेषस्यैवोपपादनादिति भावः ॥

प्रत्यक्षमिति । (कै)

---

एक इन्द्रोऽनेकस्मिन् क्रतुशत आहूतो युगपत् सर्वत्र भवति । एवमाकृतिरपि युगपत् सर्वत्र भविष्यति ॥ अवश्यं चैतदेवं विज्ञेयमेकमनेकाधि-

---

येति । भा । जात्युपलक्षितस्य द्रव्यस्य शब्देनाभिधाने सत्यभिधेयानेकत्वेनाऽनेकशब्दत्वप्रसङ्गादित्यर्थः ॥ तयाऽप्येति । भा । जातेरेकत्वाद्द्वित्वबहुत्व-

---

ङीबन्तस्य पित्वादनुदात्तप्रत्ययस्य शेषः । न तु जातौ पुंयोगे वा ... तदन्तस्य प्रत्ययस्वरेणान्तोदात्तस्य । ननु "वर्णादनुदात्ताद्" ( ४ । १ । ३९ )

प्रत्यक्षशब्देन ग्राह्यमप्युपचर्यते ॥

तत इति। (कै)

तत्र इत्यर्थः ॥

विप्रतिपन्नेति। (कै)

देहात्मप्रत्ययवत्। भ्रान्तत्वशंकयेति भावः। प्रयोगस्तु विमत-प्रत्ययो जातिविषयो देशादिभेदेऽपि अबाधितैकाकारप्रत्ययत्वात् संमतवदिति ॥

अवस्थेति। (कै)

अवस्थाकृतभेदोपपादनेन च न व्यक्त्यैक्यं विषय इति सूचितम् ॥

प्रत्यभिज्ञाप्रत्ययेति। (कै)

तद्विषयप्रत्ययेत्यर्थः ॥

उपबृंहकमिति। (कै)

भ्रान्तत्वाशङ्कानिवर्त्तनेन प्रमात्वनिर्वाहकस्तर्क इत्यर्थः ॥

न सादृश्येति। (कै)

सादृश्यरूपैकक्रियाकारितादिनिमित्तकभ्रमरूपा नेत्यर्थः ॥

---

करणस्थं युगपदुपलभ्यत इति॥ नैकमनेकाधिकरणस्थं युगपदिति चेत्तथैकशेषे शेषे। वा॥ यो हि मन्यते नैकमनेकाधिकरणस्थं युगपदुपलभ्यत इत्येक-

---

निबन्धनानि द्विवचनबहुवचनानि न सिद्ध्यन्तीति भावः। एवं भाष्यकारेण पक्षयोः साम्यं दर्शितम्। वाक्यकारस्तु जातिपक्षाश्रयणस्य प्रयोजनानि

---

इति ङीषन्तस्यापि उदात्तनिवृत्तिस्वरेणान्तोदात्तता स्यादेवेति चेत्। भ्रान्तोसि। उदात्तनिवृत्तिस्वरेवाभावात्। "वर्णानान्तणतिनितान्तानामि"ति

अविगीतः । (कै)

प्रमाणभावः । प्रमाणत्वं यस्य स्मृतस्य स्मरणस्य पदार्थविषयकस्य तेनोपनिबद्धानि वचनानि येषां तेषामित्यर्थः ॥ द्रव्यस्य शब्दार्थत्वे हि एकब्राह्मणवधनिषेधादेव प्रतीयेत ॥

एकः क इति ।

एवं चेत् यो यस्य तदाक्यश्रवणकाले बुद्धिस्थः स इति गृह्यताम् । जातेः पदार्थत्वे तु न दोष इति तात्पर्य्यम् ॥

अन्यत्र कामचार इति । (भा)

सर्वेषामिति शेषः । एकेन एकस्याहनने जातः शास्त्रार्थ इति अन्यब्राह्मणविषये सर्वेषां कामचारः स्यादित्यर्थः ॥

नन्वेकमिति । (कै)

जातिरूपमित्यर्थः ॥

सद्भावे विवादादिति । (कै)

बौद्धादीनामिति शेषः । किं च सामर्थ्येन प्रत्यवयवमवयवी-नोपलभ्यत इति वैधर्म्यादपि स न दृष्टान्तित इति भावः ॥ साका-ङ्क्षत्वादाकाङ्क्षा ह

---

तस्य दोषः स्यात् । एकशेषेऽपि नैको ह्यस्य शब्दोऽनेकमर्थं युगपदभिदधीत ॥ अवश्यं चैतदेवं विज्ञेयमाकृतिरभिधीयत इति । अन्यथाभिधाने ह्याकृत-

---

समुच्चयेनाचष्टे ॥ चोदनायां चैकस्येति । भा । सामान्यस्याशेषादेः ॥ उपाधिकृतेहिति । भा । अब्राह्मणत्वादिरुपाधिः तस्य कृतिः प्रवृत्तिः ।

---

( द्वितो–पा–फिट्सू–३१ ) फिट्सूत्रेण प्रकृतिस्वरमुदात्तत्वात् । तदुक्तं "वर्णा-दनुदात्ताद्" इति । तथा मीमांसते इति मीमांसकः । निवृत्तश्चेत्

## एकस्यापीति। (कै)

एकस्यापि अनेक इति पाठः। एकस्यापीन्द्रशब्दस्य यथानेकयागाङ्गत्वेन विषय एकबोधस्थानविषयस्य एकदेशावच्छिन्नानेकयागेषु तथा दर्शनसंभवात् तथा एकस्य अपि जातेरनेको विषय आश्रयतयेत्यर्थः॥ अनेकस्य इति पाठे एकोऽपि यथा इन्द्रशब्दोऽनेकयागस्य एकस्यापि बोद्धुर्विषयस्तथा जातिरपीत्यर्थः॥

## अव्ययीभावे इति। (कै)

द्वन्द्वस्य प्रादुर्भाव इत्यर्थः॥

## सर्वेष्विति। (कै)

प्रादुर्भावविषयेन्द्रशब्दरूपा तद्बोध्या वा एका देवता शीघ्रादिद्रव्यवत्सर्वयागेष्वङ्गतां युगपत् प्रतिपद्यत इत्यर्थः॥ भाष्येऽपि इन्द्रशब्द "आहूतः" प्रादुर्भूतः "युगपत् सर्वत्राङ्गं" भवतीत्यर्थः॥

## यदीति। (कै)

अनेकाधिकरणव्यपदेशानेकसम्बन्धो विवक्षित इत्यर्थः। एवं चैकः शब्दो यथानेकत्रार्थे एकेन युगपत् गृह्यते तथा जातिरपीत्यर्थः॥

---

संप्रत्ययः। वा॥ द्रव्याभिधाने सत्याकृतेरसंप्रत्ययः स्यात्॥ तत्र को दोषः।
तत्रासर्वद्रव्यगतिः। वा॥ तत्रासर्वद्रव्यगतिः प्राप्नोति। असर्वद्रव्यगतौ को

---

एतदुक्तं भवति। यदि आग्नेयादिशब्देन सामान्यमभिधीयते तदा तेनाशेषद्रव्याणामाक्षेपात् प्रतिद्रव्यमष्टाकपालत्वमुपाधिर्युज्यते। द्रव्ये तु पदार्थे

---

मध्योदात्तः। मीमांसामधीते मीमांसकः। "क्रमादिभ्यो वुन्" (४। २। ६१) नित्स्वरेणाद्युदात्तः। उभयोः सहविवक्षायामाद्युदात्तः। उभयोः

## अपरो शास्त्रोक्तमिति । (भा

एकः शब्दः [१]निवेशित्वादेकं द्रव्यं गोरूपं बोधयेत् तस्य केनचिदालम्भे कृते परैस्तेन वा गवान्तरालम्भेऽशास्त्रार्थः प्रत्यर्थः स्यात् । एवं न ब्राह्मणमित्यादावपि एकस्य ब्राह्मणस्यावधो विषयस्तथान्यविषये सर्वेषां कामचारेण प्रवृत्तावपि न प्रायश्चित्तं स्यादिति बोध्यम् । सर्वपुरुषान् प्रति एकव्यक्तेरेव बोधनमित्यभिमानः ॥

## अथानुष्ठानेति । (कै)

अयं भावः । जातेः साक्षादनुबन्धनाद्यसंभवात् व्यक्तिद्वारा तद्वाच्यं तथानुष्ठानविध्यर्थमेकप्रयोगे एकव्यक्तिद्वारकमेव तदाश्रीयते तथाकृतेरेकत्वे विनिगमनाविरहात् सर्वव्यक्तिद्वारकमेव तदाश्रीयते आकृतेरनेकत्वे तु प्रतिशाद्यानिरिति ॥ पूर्वाद्यस्यावतारणाच्छब्दोऽनुपपन्नोऽत आह

## तु शब्दस्यार्थे इति ॥ (कै)

भाष्ये

१ "निवेशित्वात्" इत्यारभ्य "शास्त्रार्थः" इत्यन्तं नास्ति क पुस्तके ॥

दोषः । गौरनुबन्ध्योऽजोऽग्नीषोमीय इति । एकः शास्त्रोक्तं कुर्वीतापरोऽशास्त्रोक्तम् । अशास्त्रोक्ते च क्रियमाणे विगुणं कर्म भवति विगुणे च

एकेनैव यजमानेन सकृदेवाष्टाकपालः पुरोडाशो निरूप्यते नान्येन नाप्यन्यदेत्यर्थः ॥ कः पुनरिति । भा । गौरनुबन्ध्य इत्याग्नेयमष्टाकपालमिति

सह विवक्षायामाद्युदात्तः शिष्यते नित्स्वरस्य परत्वात् । अक्षौ अक्षाः । "अक्षस्यादेवनस्य" (फिटसू–३५–पा २) ति फिटसूत्रेण शकटाक्षे

## अनवयवेनेति। (भा)

जात्याश्रयाव्यक्तिविशेषा अवयवा इत्युच्यन्ते। अनवयवेन व्यक्तिविशेषानालम्बनेनेत्यर्थः॥ नन्वाश्रयभेदात्तद्भेदोऽत आह

## सर्वाभिरिति। (कै)

भेदकाभावान्न भेद इति भावः। प्रत्यक्षविरोधाद् धर्मिग्राहकमानविरोधाच्च भेदानुमानमसंगतमिति भावः॥ ननु आदित्यस्य प्रत्येकं समासमाप्त्यभावेन दृष्टान्तासंगतिं मत्वाह

## प्रतिदेशमिति॥ (कै)

## अनभिधेयाया इति। (कै)

शक्यतावच्छेदकमशक्यमेवेत्यर्थः। यद्वा प्राधान्येनानभिधेयाया इत्यर्थः॥

## परित्यक्तभेदमिति। (कै)

परित्यक्तावान्तरभेदमित्यर्थः॥ ननु द्रव्यस्य प्रत्येकं समाप्तेः प्रकृतेरनुपयोगोऽत आह

## शास्त्रमिति॥ (कै)

---

कर्मणि फलानवाप्तिः॥ ननु च यस्याप्याकृतिः पदार्थस्तस्यापि यद्यनवयवेन चोद्यते न चानुबध्यते विगुणं कर्म भवति विगुणे च कर्मणि फलानवाप्तिः।

---

चानयोरित्यर्थः॥ एकाग्निर्वर्त्तनेनेति। भा। निष्पन्नो हि पशुर्यागसाधनायोपादीयते॥ अपराग्निर्वर्त्यनेति। भा। आग्नेयोऽष्टाकपालश्चोदनयैवोत्-

---

आद्युदात्तः। देवनार्थे तु "फिष" (फिट्सू-१-पा१) इत्यन्तोदात्तः। शकटावयवविभीतकयोस्तु बजन्तत्वादाद्युदात्तः। अत एव "प्राचेयाम्"

**शब्देनाभिधाने इति । (कै)**

प्राधान्येनेत्यर्थः ॥ नन्वेवं चोदनायां चैकस्येति चोऽनुपपन्न इत्यत आह

**वाक्यकार इति ॥ (कै)**

**प्रयोजनानि । (कै)**

प्रयोजनान्तराणि ॥

**समुच्चयेनेति । (कै)**

द्रव्याभिधाने ह्याकृत्यसंप्रत्यय इत्यनेन समुच्चय इति बोध्यम् ॥ एकस्याग्नेयादेर्य उपाधिरष्टाकपालत्वादिस्तस्य पुनः पुनः प्रवृत्तेरिति वार्त्तिकार्थः । [1]समासवाच्यत्वात् एकस्येति व्याचष्टे

**सामान्यस्य (कै)**

इत्यादि ॥

**अष्टाकपालत्वादि (कै)**

इत्यादिपदेन निर्वापः ॥ अत एव भाष्ये स एव दर्शित "एकं निरुप्य" इत्यादिना ॥

---

१ समासस्येष्टत्वात् । इ ॥

---

एकाकृतिरिति च प्रतिज्ञा हीयते । यथास्य पक्षस्योपादाने प्रयोजनमेक-शेषो न वक्तव्य इति स चेदानीं वक्तव्यो भवति । एवं तर्ह्यनवयवेन चोद्यते

---

पाद्यते न तु चोदनायाः पूर्वं निष्पन्न इत्यर्थः । तत्र निर्वृत्ते भेदाग्रहणात् प्रयोगान्तरेऽपि प्रवृत्तिः स्यान्न तु निर्वर्त्ये सादृश्याग्रहणादित्यवश्याश्रयणीया

---

इति सूत्रे अर्थाकिंतवनिन्द्राप्रस्ताव अत्तस्याहमेकपरस्य इत्यादयाश्च शब्दा बहवोऽन्तोदात्ता एव प्रयुज्यन्ते । तस्य नास्ति इत्यादौ तु स्यावयवपरत्वा-

प्रवृत्तिरिति । (कै)

पुनः पुनः वृत्तिरित्यर्थः ॥

उत्पाद्यत इति । (कै)

उत्पाद्यत्वेन बोध्यत इत्यर्थः ॥ ननु प्रभेदेऽपि द्वितीयोपन्यासे किं बीजमत आह

तत्रेति ॥ (कै)

[१]रूपसामान्याद्वा सिद्धमिति "अ इ उण्" (शिवसू-१) इति सूत्रस्थभाष्यरीत्या निष्पन्नेदमभिधेयं नेदमिति विवेकाग्रहादित्यर्थः ॥ ननु तत्राप्युक्तरीत्यैव प्रवृत्तिः स्यादत आह

सादृश्येति । (कै)

तस्य संबन्धिकत्वेन प्रतियोग्यन्तरानुपस्थितेरिति भावः ॥ ननु व्यक्तिशक्तौ आनन्त्यव्यभिचारयोः सत्त्वात् जातौ शक्तिरित्याशङ्क्य जातिरेव नास्तीत्याह

वृत्तिविकल्पेति । (कै)

---

१ रूपसामान्याद्वा । वा । रूपसामान्याद्वा सिद्धमेतत् । शिवसू-१ ॥

---

प्रत्येकं च परिसमाप्यते यथादित्यः । ननु च यस्यापि द्रव्यं पदार्थस्तस्याप्य- नवयवेन चोद्यते प्रत्येकं च परिसमाप्यते । एकशेषस्तया वक्तव्यः । तथापि

---

जातिः ॥ द्रव्याभिधानमिति । भा । जातेर्वृत्तिविकल्पाद्यक्षमत्वेनाभावं मन्य- मानो व्यक्तिरर्थमेव शब्देनाभिधीयते इति मन्यते ॥ आकृतौ चोदितायाम-

---

द्याद्युदात्तः । उभयोः बहुविवक्षायान्तु आद्युदात्तस्य शेषः । इन्द्रिय- वाचिना क्लीबेन बहुविवक्षायान्तु ॥ "नपुंसकमनपुंसकेन" (१ । २ । ६९ )

न तावद्द्रव्येषु व्यासज्यवृत्तिः। एकाश्रयणाशेऽप्रतीत्यापत्तेः। किञ्च "गामालभेत" इत्यादि चोदनासु सर्वद्रव्यालंभापत्तिः। प्रत्येकसमाप्तौ तु द्रव्यान्तरे तदनापत्तिः। तत्रापि सत्त्वे "एकाकृतिरि"ति प्रतिज्ञाहानिरित्यर्थः। तत्तत्संस्थानाद्युपलक्षितमधिष्ठानचैतन्यमेव द्रव्यंमिति नानन्यव्यभिचाराविति तात्पर्य्यम् ॥ भाष्ये

चोदनास्विति। (भा)

प्रवर्त्तकवाक्ये तस्य द्रव्यस्यारम्भणात्। इदमुपलक्षणमारम्भणालम्भनादिकरणादित्यर्थः। तच्चारम्भणं क्रयो बन्धनं वा। जातिवादे दूषणमाह भाष्ये

आकृतौ चोदितायामिति। (भा)

कार्य्यसम्बन्धित्वेन चोदितायामित्यर्थः॥

[१]तच्छेषपूरणेन व्याचष्टे

अयुक्तम् (कै)

इत्यादिना॥ तत्रैव दूषणान्तरं

---

१ कर्म। क॥

---

तर्हि द्विवचनबहुवचनानि साध्यानि॥ चोदनायां चैकस्योपाधिवृत्तेः। वा॥ चोदनायां चैकस्योपाधिवृत्तेर्मन्यामह आकृतिरभिधीयत इति। आग्नेयम्

---

मिति। भा। आकृतिवादिपक्षे शब्देनाकृतिश्चोद्यते द्रव्ये तु कार्य्यं प्रवर्त्तते। अयुक्तं चैतत्। न ह्यन्यचोदनेऽन्यस्य कार्य्ये क्रियमाणे यथोक्तं कृतं

---

इति अग्नावष्टाकपालमित्याद्यूह्यम्। नन्वचेतनानां देवतानां कथं पुंनपुंसकादिव्यवस्थेति चेत्। उच्यते। लोकप्रसिद्धमवयवसंस्थानविशेषात्मकलिङ्ग

यथा कटं करोतीति । (कै)

तत्र हि कटकर्मकक्रियात्वेव बोधो न तु तस्याः क्रियायाः विद्यमानमणिसंदर्शनादिपूर्वकारम्भकर्मत्वं तत्तद्रूपेण बोधविषय इति भावः ॥

---

सम्बन्धो वृत्तितास्तुतिश्च गुणवत्त्वप्रतिपादकशब्दप्रयोगादिः । स्मरादिति हेतौ पञ्चमी । बोधाश्रयस्य "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" (१ । ४ । ३४ ) इति सम्प्रदानत्वम् । ज्ञीप्स्यमानपदेन प्रधानभूतण्यर्थकर्मणो ग्रहणम् । तन् स्वारस्याद् यद्विषयकज्ञानानुकूलव्यापारस्तस्य प्रकृत्यर्थ-कर्मणोऽपि तेन पदेन ग्रहणम् । स अन्यथा ज्ञाप्यमान इत्येव वदेत् । तत्राद्ये गोपीकर्तृका स्मरहेतुकश्लाघासम्प्रदानकार्यात् कृष्णवृत्तिबोधविषया-

---

भवति ॥ क्रियापि कृत्रिमं कर्म । न सिध्यति । "कर्त्तुरीप्सिततमं कर्म"

---

करणभाव एकदा एकात्मन्येव नोपपद्यत इति भावः ॥ क्रियापीति । भा । प्रतीयमानक्रियापेक्षः कारकभावः । प्रविश पिण्डीमित्यादाविवाने-

---

विकल्पेनैव सर्वत्र संज्ञे स्यातामुभे यदि ।

आरम्भेण न योगस्य प्रत्याख्यानं समं भवेद्" इति ॥

अस्यार्थः । कर्म स्वाख्ययैव क्रियेप्सितत्वप्रयुक्तकर्मसंज्ञयैवोपचर्यते व्यवक्रियते । न तु सम्प्रदानसंज्ञयागत्यर्थकर्मणि तु भेदाभेदौ द्वावपि

---

ततश्चोपसर्गद्वयोपादानसामर्थ्यात् कालान्तरावच्छिन्ना क्रियानाश्रीयते । ननु यथा "तेन दीव्यती" ( ४ । ४ । २ ) त्यादौ सङ्ख्याकालयोरविवक्षा तिद्वा । सत्यम् । अयमेव न्यायसिद्धोऽर्थ उपसर्गद्वयोपादानेन प्रदर्श्यते यदात्वभिप्रै-तीत्यस्य ईप्सतीत्यर्थस्तदाभिग्रहणं कर्त्तव्यमेव । क्रियाग्रहणमपि कर्त्तव्यमिति

## पशुं रुद्राय ददातीति (भा)

भाष्यप्रयोगानुपपत्तेराह

## एतच्छन्द इति॥ (कै)

ननु पूजायां पशोः करणत्वाद्रुद्रस्य च कर्मत्वात् किमुपसंख्यानेन इत्यत आह

---

स्तुतिरिति बोधः। स्तुतिश्चात्मनः परस्य वेति तु प्रकरणादिगम्यम्। अत एव कृष्णाय गोप्यात्मानं परस्मा श्लाघ्यं कथयतीत्यर्थ इति प्राञ्चः। कर्मसंज्ञापवादोऽयम्। कृष्णस्यैव स्तुत्यत्वे तु परत्वात् कर्मत्वमेव। यदा गुणोत्कर्षेण श्लाघ्यमानः कृष्णो गुणवत्तया तत् समर्थाचरणेनाध्यारोपितप्रेरणत्वाद्धेतुरिति हेतुत्वापवाद इयम्। स्तुते इत्यत्र

---

(१।४।४९) इत्युच्यते कथं च नाम क्रियया क्रियेप्सिततमा स्यात्।

---

त्यर्थः। यदा तु सन्दर्शनादयो धात्वर्थोद्देशेन विवक्ष्यन्ते तदा सम्प्रदानसंज्ञैव यथा कटं करोतीति। सा च भेदाभेदविवक्षा प्रयोगदर्शनवशेन नियत-

---

विवक्ष्यते। इति रूपद्वयसिद्धिः। व्यभिचारोऽतिप्रसङ्गस्तु न दृश्यते। विवक्षाया व्यवस्थितत्वादेव। एतदेव ज्ञापयति विकल्पेनेति। समं तुल्यफलकम्। तस्मात् सूत्रं प्रत्याचक्षाणस्य भगवतो विवक्षानियमोऽभिमतः। मत्यर्थेषु विवक्षाद्वयम्। पत्ये शेते इत्यादौ तु भेदविवक्षैव। ओदनं पचतो-

---

वार्त्तिकम् एतद्व्याचष्टे "क्रियाः इत्यादि"। ननु क्रियामपि लोके कर्मेत्युपचरन्ति। किं कर्म करिष्यसि कां क्रियामिति। तत्र कर्मणा यमभिप्रैतीत्येव सिद्धम् एवमपि कथं "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति" सन्दर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् क्रियापि कृत्रिमं

त्यजतीत्यर्थ इति । (कै)

अन्यार्थं त्वदुक्तं न सम्भवतीत्यर्थः ॥

त्यजति (कै)

इत्यस्य अग्नाविति शेषः ॥ तदुक्तं भाष्ये

अग्नौ किल पशुः प्रक्षिप्स्यते इति ॥ (भा)

---

शीतेर्बोधविषयमितरादर्शनयोग्यदेशस्थापनमर्थः । आत्मानमित्यादेरध्याहारः । सपत्नीभिया चात्मादेस्तथास्थापनं बोध्यम् । एवं च गोपीकर्तृका कृष्णसम्प्रदानकार्यात् कृष्णवृत्तिविषयात्मकर्मकतथावस्थानानुकूला स्थितिस्तत् सम्प्रदानबोधानुकूला क्रियेति बोधः । तिष्ठतेः स्वाभिप्रायबोधानुकूला स्थितिरर्थः ॥ शपेः स्वाभिप्रायबोधानुकूलशपथकरणमर्थः । कृष्णसम्प्रदानकबोधानुकूला स्थितिस्तत् सम्प्रदानबोधानुकूलशपथकरण-

---

क्रियापि क्रिययेप्सिततमा भवति । कया क्रियया । संदर्शनक्रियया वा

---

विषयैवाप्नोयत इति प्रयोगस्यासंकरः ॥ कर्मणःकरणसंज्ञेति । भा । एतच्छन्दोविषयम् । "सर्वविधयश्छन्दसि विकल्प्यन्ते" इति यथा प्राप्तमपि

---

आदावभेद विवक्षैव "चेष्टायामनध्वनि" (२ । ३ । १२) इत्येतत्प्रत्युदाहरणयोरपि अभेद विवक्षैव । मनसा हरिं व्रजति । अध्वानं गच्छतीति विधा चेदम् । यदाह

---

कर्म । तथा हि । य एष मनुष्यः प्रेक्षापूर्वकारी भवति स बुद्ध्या तावत् कंचिदर्थं संपश्यति इदमीदृशमिति तद् दृष्टं प्रार्थयते अपि ममेदं स्यादिति ततस्तदुपायभूतां क्रियां पश्यति अस्या एतत् फलमिति । तत प्रार्थ्यते कथमियं निष्पद्यतामिति ततस्तत्साधनानि समवस्थाप्य कर्तुमध्य-

नन्वेवं "रुद्राय ददाति" इत्युक्तमनुपपन्नमत आह

तद्रुद्रायोपक्रियत इति । (भा)

"तत्" तेन प्रक्षेपेण "रुद्राय" रुद्रमुद्दिश्य "उपक्रियते" ददातीति व्यवहार इत्यर्थः ॥ अग्नौ दग्धे स्वत्वानुत्पत्त्या तदुद्देश्यक-त्यागे ददातिर्भाक्त इति भावः ॥

---

मिति बोधः । यद्वा । श्लाघादेस्तुत्यादिपूर्विका बोधनार्थः । स्तुत्या कृष्णा-मात्मानुरागं बोधयति । ह्नुत्या त्वं कृष्णां बोधयति । स्थित्या प्रपथेन त्वं कृष्णां बोधयतीत्यर्थः । प्रकृत्यर्थकर्मणो ग्रहणे तु स्तुत्या ह्नुत्या स्थित्या प्रपथेन कृष्णासखीजनं ज्ञापयतीत्यर्थः ॥ भक्ताय धारयति मोक्षं हरिः । धृङ् अवस्थान इति धातोर्णिचावस्थानानुकूलो व्यापारो धारेरर्थः । तद-र्थावस्थित्याश्रयसम्बन्धी सम्प्रदानं "धारेरुत्तमर्णः" ( १ । ४ । ३५ ) इति

---

प्रार्थयति क्रियया वाऽध्यवस्यति क्रियया वा । इह य एष मनुष्यः प्रेक्षा-

---

प्रयोगो भवति ॥ पशुना रुद्रं यजत इति । भा । रुद्रं देवतामुद्दिश्य पशुं त्यजतीत्यर्थः । केचिदन्वर्थसंज्ञाया विज्ञानाद्ददातिविषय एव सम्प्रदान-

---

"अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम्" इति ॥

अनिरा कर्तृ यथा । सूर्याय अर्घ्यं ददाति । नात्र सूर्यः प्रार्थयते न

---

वस्यति । प्रतीयमानक्रियापेक्षोऽपि कारकभावो भवत्येव । यथा प्रविश पिण्डीमित्यत्र भक्षय इति गम्यते । सूत्रकारश्च सूचयति "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" ( २ । ३ । १४ ) इति । एवमपि क्रियाग्रहणं कर्तव्यं ददाति कर्मत्वात् । 'निगृह्णीत इति" नास्तिक्याभिमति इत्यर्थः । यद्वं गम्

अन्वर्थेति । (कै)

सम्यक् प्रदीयतेऽस्मै इतीत्यर्थः ॥ नन्वेवमपि रजकस्य वस्त्रं ददातीत्यत्रापि स्यादत आह

दानं चेति । (कै)

तत्र ददाति प्रयोगस्तु उपमानात् कारकशेषत्वात् षष्ठीति भावः ॥

---

सूत्रात् । हरिकर्तृको भक्तसम्प्रदानको मोक्षकर्मकाश्च स्थित्यनुकूलो व्यापार इति बोधः । शेषषष्ठ्यपवादोऽयम् । अत्रोत्तमर्णदानक्रियया धारयतस्य निमित्तं यतोऽसौ तस्मै ददाति । ददातिस्तु न श्रूयते इत्य-श्रूयमाणक्रियत्वात् शेषषष्ठीप्राप्ता । सर्वत्र विशेषविवक्षाया अभावे क्रिया-निमित्तत्वमात्राश्रयणेन शेषत्वं प्राप्तमितिबोध्यम् । तदुक्तम् ।

---

पूर्वकारी भवति स बुद्ध्या तावत् कंचिदर्थं सं पश्यति संदृष्टे प्रार्थना प्रार्थनायामध्यवसायोऽध्यवसाय आरम्भ आरम्भे निर्वृत्तिर्निर्वृत्तौ फला-

---

संज्ञेत्यभ्युपगतम् । दानं च स्वस्वत्वनिवृत्तिः परस्वत्वापत्तिपर्यन्तेति प्रत्यक्षापि । तदुभयमप्ययुक्तम् । अन्यत्रापि भाष्यकारेण संज्ञाया अभ्युपगमात् । तथा च

---

वानुमन्यते न च निराकरोति । प्रेरकं यथा । विप्राय गां ददाति । ननु दानस्य तदर्थत्वात् तादर्थ्ये चतुर्थी सिद्धैव तत् किं सम्प्रदानसंज्ञया । नैवम् । दानक्रियार्थं हि सम्प्रदानं न तु दानक्रिया तदर्था कारकाणां क्रियार्थत्वात् ।

---

कुत्सायामनुदात्तेत् । "युद्धायेति" युद्धविषयं संनाहपूर्वकं निश्चयं करो-तीत्यर्थः । नश्यतिः स्वरितेत् । "पत्ये शेते" इति । पतिमुपहत्य शेत इत्यर्थः । यदि तर्हि क्रिययाभिप्रेयमाणस्यापि भवति कटं करोतीत्यादावपि प्राप्नोति । वचनाद्धि कर्मसम्प्रदानसंज्ञयोः पर्यायः स्यात् । नैतत् सार्वत्रिकं किं तर्हि प्रयोगदर्शनवशेन विषयताविषयम् । "कर्मणः करणसंज्ञा" इत्यादि ।

## अन्यथापीति । (कै)

"पत्ये शेते" इत्यादावपीत्यर्थः ॥ पूर्वोक्तप्रयोगे तु शेषत्वविवक्षायां षष्ठी ॥

## न शूद्राय (कै)

इत्यस्य

---

" हेतुत्वे कर्मसंज्ञायां शेषत्वे वापि कारकम् ।
रुच्यर्थादिषु शास्त्रेण सम्प्रदानाख्यमुच्यते "

इति ॥ ननु ऋणं नाम सजातीयद्रव्यान्तरदानमङ्गीकृत्य परस्वपरकीयद्रव्यादानम् । तच्चान्योऽधमर्णनिष्ठः परिशोधननाम्नो वृत्तिविशेषो वोभयथापि नेह प्राप्तिः । मोक्षस्य उक्तरूप ऋणत्वाभावेन भक्तस्योत्तमर्णत्वाभावादिति चेन्न । अवश्यदेयत्वेन तत्रापि ऋणव्यवहारात् ॥ पुष्पेभ्यः स्पृहयति । स्पृहयतिरिच्छामात्रवाची । इच्छानुकूलमनः संयोगादि-

---

व्याप्तिः । एवं क्रियापि कृत्रिमं कर्म । एवमपि कर्मणः करणसंज्ञा वक्तव्या

---

क्रिया ग्रहणस्य "गत्यर्थकर्मणी" ति सूत्रस्य च प्रत्याख्यानं कृतम् । तथा स्वत्वनिवृत्त्यभावेऽपि ददातेः प्रयोगो दृश्यते ।

---

सम्प्रदानार्थं तु दीयमानं कर्मेति वाक्यार्थभूतायांदानक्रियाया अनादरणात् तादर्थ्यचतुर्थ्या अप्राप्तौ संज्ञारम्भादिति हेलाराजः ॥ तदेतत् सूचितम् । त्यागाङ्गकर्मणेप्सितमिति । कर्मसम्प्रदानयोः करणकर्मत्वे वाच्ये । पशुना रुद्रं

---

एतच्छन्दोविषयं "सर्वे विधयश्छन्दसि विकल्प्यन्ते" इति यथा प्राप्तमपि प्रयोगो भवति । भाष्ये तु ददाति कर्मणेति नाश्रितं प्रयोगाश्च बहवः । "अग्नये चरुं निर्वपेत्" "देवेभ्यो ब्रह्मौदनमपचत्" "देवेभ्यो हव्यं वहन्तः छन्दांसि वै देवेभ्यो हव्यमूढ्वा" । "यदङ्ग दाशुषे त्वम्" । "शं नः करत् पर्वते" इत्यादयश्चन्द्रमते क्रियाग्रहणं न कर्तव्यम् । कथं तर्हि सम्प्रदान-

मतिम् (भा)

तज्जनकशास्त्रं नोपदिशेदित्यर्थः ॥ द्वितीये ददातिः संयोगे लाक्षणिक इति बोध्यम् ॥

---

व्यापारवाची च । फलावच्छिन्नेच्छावाची च वा आद्ये "स्पृहेरीप्सित" (१ । ४ । ३६) इति सम्प्रदानत्वम् । तत्र ह्यीप्सितत्वं धात्वर्थव्यापारजन्य-फलाश्रयत्वम् । न तु फलस्य धात्वर्थत्वाग्रहः । कर्मसंज्ञा तु धात्वर्थफला-श्रयस्य इत्युक्तम् । शेषषष्ठ्यपवाद एतत् सम्प्रदानविभक्तिः । पुष्पसम्प्रदा-निका इच्छेति बोधः । अन्त्ये कर्मत्वम् । पुष्पाणि स्पृहयतीति । सम्प्रदान-स्यापि तत्वेनाविवक्षायां षष्ठ्येव ॥

---

सम्प्रदानस्य च कर्मसंज्ञा । पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः । अग्नौ किल पशुः प्रक्षिप्यते तद्रुद्रायोपक्रियते इति ॥

---

"न शूद्राय मतिं दद्यात्"

इति । खण्डिकोपाध्यायस्तस्मै चपेटां ददातीति च ॥

---

यजते । पशुं रुद्राय ददातीत्यर्थः । एतच्च वचनं उक्तोदाहरणमात्रविषयम् । अत एव सुबव्यत्ययेन सिद्धत्वात्प्रत्याख्यायते लोके तु यजेः पूजार्थत्वात् पशोः करणत्वं सिद्धम् ॥

---

मिष्यते तत्र संदर्शनादीनां क्रियायाश्च भेदो विवक्ष्यते ततश्च तैराप्यमाना क्रियापि ह्यस्मिं कर्मेति सिद्धं तयाभिप्रेयमाणस्य सम्प्रदानत्वं यत्र तु नेष्यते तत्र भेदो न विवक्ष्यते ततश्चोदनाद्येकफलावच्छेदेन एकीकृतया क्रिययाऽऽप्य-मानस्य कर्मत्वमेव भविष्यति । कटं करोति । ओदनं पचतीति । गत्यर्थेष्व-भयम् विवक्ष्यते भेदोऽभेदश्च तत्र भेदविवक्षायां ग्रामं गच्छतीति प्रयोग इति "गत्यर्थकर्मणि" इत्येतदपि न वक्तव्यं भवति ॥

# क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रतिकोपः। १। ४। ३७॥

ननु तेषां सर्वेषां योगे यथा स्यादित्येतदर्थं तदत आह

**एकेनैवेति।** (कै)

---

क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रतिकोपः। १। ४। ३७॥ हरये क्रुध्यति द्रुह्यतीर्ष्यति असूयति। तत्र वधाद्यनुकूलव्यापारजनकश्चित्तवृत्तिविशेषः क्रोधः क्रुधेरर्थः। दुःखजनकक्रियारूपापकारजनकश्चित्तवृत्तिविशेषो द्रुहेः। धात्वर्थ-लोपसंगृहीतत्वादेतावकर्मकौ। विषयतयैतद्धात्वर्थमूलभूतकोपसम्बन्धिनो हरेः "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रतिकोपः" इति सूत्रेण सम्प्रदानत्वम्। हरिसम्प्रदानको द्रोहः क्रोध इति बोधः। अत्र शेषषष्ठ्यपवादत्वम्। उत्कर्ष-विरोधिधर्मारोपानुकूलव्यापारजनकश्चित्तवृत्तिविशेष ईर्ष्या। शौचाचारादि-गुणविषये दम्भादिकृतत्वरूपदोषारोपानुकूलश्चित्तवृत्तिविशेषोऽसूया। एते चित्तवृत्तिविशेषरूपकोपमूलकाः। प्रकृष्टस्य वाक् चक्षुरादिविकारानुमेयस्यैव

---

क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रतिकोपः। १। ४। ३७॥ किमेत एकार्था आहोस्विन्नानार्थाः। किं चातः। यद्येकार्थाः किमर्थं पृथङ्निर्दिश्यन्ते। अथ

---

क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रतिकोपः। १। ४। ३७॥ किमेत इति। भा। ननु लोकव्यवहारादेवार्थावगमात् सन्देहानुपपत्तिः। एवं तर्हि चित्त-दोषरूपता सर्वेषामस्तीति सामान्यापेक्षायामेकार्थत्वमवान्तरभेदविवक्षायां तु भिन्नार्थत्वमित्यदोषः॥ किमर्थमिति। भा। एकेनैव धातुनार्थस्य उपस्थितत्वादन्येषां वैयर्थ्यप्रसङ्गः॥ नानार्था इति। भा। क्रोधो रोषः। द्रोहोऽभिचारः। ईर्ष्या परगुणासहनम्। असूया परगुणविध्वंसनम्।

सूत्रेऽर्थग्रहणसत्त्वादिति भावः ॥

## अभिचार इति । (कै)

दुःखजनको व्यापार इत्यर्थः । परगुणासहने एतत् स्वस्य तदधिकगुणसम्पादनकफलं गुणविध्वंसनं गुणेषु दोषत्वाविष्करणम् ॥

नन्विदमयुक्तं न हि योषादीनां सामान्यं कुपि धातावस्तीत्यत आह

---

क्रोधपदार्थत्वेन तस्यापि कोपमूलकत्वम् । कुपक्रोध इति तु तद्वृत्तिकोपत्व-सामान्यमादाय । कर्मसंज्ञापवादोऽत्र । हरिसम्प्रदानोत्यर्थविरोधीत्यादि-क्रमेण बोधः । तद्धात्वर्थमूलभूतकोपविषयत्वे सति तद्धात्वर्थफलाश्रयस्यात्र सम्प्रदानत्वम् । सत्यन्तेन भार्य्यामीर्ष्यति नैनामन्योऽद्राक्षीत् इत्यादेर्व्युदासः । मित्राय द्रुह्यति प्रतापोऽपीत्यादौ चेतनत्वारोपो बोध्यः । ईर्ष्या तु बलवद् दुःसाधनताज्ञानजन्योऽप्रीतिजनकश्चित्तवृत्तिविशेषः । श्वोषधं द्वेष्टीति यथा । एतदेवानभिनन्दनम् । तद्योगे तु नैतत्प्रवृत्तिः । क्रुधाद्यर्थत्वाभावात् ॥ कृष्णाय राध्यति ईक्षते वा अत्र प्रश्नविषयशुभाशुभपर्य्यालोचनं धात्वोरर्थः । तदर्थप्रश्नविषयसम्बन्धिनः कृष्णस्य "राधीक्ष्योर्यस्य विप्रश्नः" ( १ । ४ । ३९ ) इत्यनेन सम्प्रदानत्वम् । कृष्णसम्प्रदानकमर्थात् कृष्णसम्बन्धिप्रश्नविषयशुभा-शुभपर्य्यालोचनमिति बोधः ॥ विप्राय गां प्रतिशृणोत्याशृणोति वा । अत्र

---

नानार्थाः कथं कुपिना शक्यन्ते विशेषयितुम् । एवं तर्हि नानार्थाः कुपौ त्वेव-

---

कुपाविति । भा । कुपौ धातौ वाच्यत्वेन यदवस्थितं तदेतेषां साधारण-मित्यर्थः । कोपपूर्वाणां सर्वेषां ग्रहणार्थं यं प्रति कोप इति विशेषणमित्यर्थः । तेनेह न भवति भार्य्यामीर्ष्यतीति । भा । परैर्दृश्यमानां न सहत इत्यय-मर्थ इति नास्ति कोपप्रभवत्वमत्र ईर्ष्यायाः । न ह्यकुपितः क्रुध्यतीति । भा । ननु कोपः क्रोध एवेति भेदाभावात् कथं पौर्वापर्य्यम् । एवं तर्हि प्रथमा-मनुद्भूतां कोपावस्थां द्वितीयां चोद्भूतां विकृतवाक्कायव्यापारानुमीयमाना-

## कुपौ धाताविति ॥ (कै)

## अनभिनन्दनम् (कै)

प्रीत्यभावः ॥

---

प्रवर्त्तनाजन्योऽभ्युपगमो धात्वर्थः । स्वार्थप्रवर्त्तनाश्रयस्य "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता" (१ । ४ । ४० ) इत्यनेन सम्प्रदानत्वम् ॥ होत्रेऽनुगृणाति प्रतिगृणाति च इत्यत्र शंसनविषयहर्षानुकूलव्यापारलक्षणं प्रोत्साहनं धात्वर्थः । धात्वर्थशंसनाश्रयस्यात्र "अनुप्रतिगृणश्च" (१ । ४ । ४१ ) इत्यनेन सम्प्रदानत्वम् ॥ शतेन शताय वा परिक्रीतः इत्यत्र करणस्य पक्षे सम्प्रदानत्वम् । शतव्यापारश्च दानम् ॥ फलेभ्यो याति अत्राहर्त्तुमिति तुमुन्नार्थकर्मचतुर्थ्यर्थः । फलकर्मकाहरणफलकं यानमिति बोधः ॥ एतद् बोधोपपत्तिराकाङ्क्षावादान्ते दर्शिता । यत्तु फलेभ्य इत्यत्राहरणक्रिया चतुर्थ्यर्थः । कर्मत्वप्रयोजकत्वे पूर्वपरयोः संसर्गाविति । तन्न । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" (२ । ३ । १४ ) इति सूत्रसत्त्वेनेदृशेऽर्थे साधुत्वे मानाभावात् ॥ यागाय याति । अत्र प्रातिपदिकार्थे प्रथमापवादचतुर्थी । घञर्थं तुमुना समानार्थः । यागफलकं यानमिति बोधः ॥

---

सामान्यमस्ति । नह्यकुपितः क्रुध्यति न वा कुपितो द्रुह्यति न वा कुपित ईर्ष्यति न वा कुपितोऽसूयति ॥

---

नास्तीत्येतदुक्तमित्यदोषः ॥ न वा कुपितो द्रुह्यतीति । भा । यत्र विषये सम्प्रदानसंज्ञेष्यते तदुद्देशेनैतदुच्यते न तु सर्वविषयापेक्षया । अन्यथा व्यभिचाराभावाद् यं प्रतिकोप इति विशेषणमनुपादेयं स्यात् ॥ भार्यामीर्ष्यतीति । भा । विनापि कोपात् प्रयोगदर्शनाच्च । अस्मात् ईर्ष्यतीत्यत्र सम्प्रदानसंज्ञा न भवति विधेरक्रोधार्थत्वात् । अनभिनन्दने विधिर्वर्त्तते यथोपर्धं देष्टीति ॥

# साधकतमं करणम् । १ । ४ । ४२ ॥

अथ कारकाधिकारात् क्रियानिरूपितातिशयितकारकत्ववत् करणमित्यर्थः। अतिशयश्च यद्व्यापारानन्तरमव्यवधानेन फलोत्पत्ति-स्तत्त्वम् ॥ ननु पूर्वोक्तातिशयबोधकतया तत् सार्थकमत आह

---

साधकतमं करणम् । १ । ४ । ४२ ॥ करणत्वञ्च करणता शक्तिमत्त्वम् । सा च शक्तिः यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिर्विवक्ष्यते तन्निष्ठा अधि-करणादिव्यापारव्यवधानेनापि यदा क्रियानिष्पत्तिर्विवक्ष्यते तदा तेषामपि करणत्वमिष्टमेव ॥ तदाह हरिः

---

साधकतमं करणम् । १ । ४ । ४२ ॥ तमब्ग्रहणं किमर्थं साधकं करणमित्येवोच्येत । साधकं करणमितीयत्युच्यमाने सर्वेषां कारकाणां करण-

---

साधकतमं करणम् । १ । ४ । ४२ ॥ तमब्ग्रहणमिति । भा । कार-काधिकारात् साधकत्वे लब्धे पुनः साधकश्रुतिः प्रकर्षमवगमयतीति प्रश्नः ॥ सर्वेषामेवेति । भा । प्रकर्षगतिस्तत्रत्य प्रतिपादयिष्यते । तत्र वचन-

---

साधकतमं करणम् । १ । ४ । ४२ ॥ क्रियायां प्रकृष्टोपकारकं करणसंज्ञं स्यात् । यद्व्यापारानन्तरं क्रियानिष्पत्तिः तत्प्रकृष्टम् ॥ उक्तं च

---

साधकतमं करणम् । १ । ४ । ४२ ॥ षिधु संराद्धावित्यस्य हेतु मण्ण्यन्तस्य "सिद्धतेरपारलौकिके" इत्यात्वे राधसाधसंसिद्धावित्यस्य वा ण्यन्तस्य साधकशब्दः क्रियात्मकस्यार्थः । प्रयोज्यः कर्ता । सिध्यतः साध्य-

कारकाधिकारादिति ॥ (कै)

ननु सर्वेषां करणत्वे संज्ञान्तराणां का गतिरत आह

तत्रेति ॥ (कै)

संज्ञाद्वयेति । (कै)

कारकसंज्ञैव कार्य्याऽन्वर्थसंज्ञया च स्वानुरूपः संज्ञाविषयः कारके तृतीयेत्येव कार्य्यमिति भावः ॥ ननु सावकाशत्वे एव परत्वस्य व्यवस्थापकत्वादेकविषये द्वयोः परत्वानवकाशत्वयोरसम्भवादाह

---

"क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥
वस्तुतस्तदनिर्देश्यं न हि वस्तुव्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यत"

---

संज्ञा प्रसज्येत । सर्वाणि हि कारकाणि साधकानि । तमग्रहणे पुनः क्रियमाणे न दोषो भवति ॥ नैतदस्ति प्रयोजनम् । पूर्वस्तावत् संज्ञा

---

सामर्थ्यादेकसंज्ञाधिकाराच्च करणसंज्ञायाः संज्ञान्तराणां च विकल्पः स्यात् ॥ नन्वसति विशेषाश्रयणे करणकारकसंज्ञाद्वयोपादानमनर्थकं स्यात् । तर्हि संज्ञाद्वयविधानसामर्थ्यात् करणसंज्ञा कंचिदेव विषयं परि-

---

"क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणं तत्तदा स्मृतम्" ॥

---

वतो वा क्रियात्मनोऽर्थस्य प्रयोजकतमं साधकतमम् ॥ ननु सामग्र्यधीना क्रियासिद्धिर्न खलु कर्त्रादीनामन्यतमापायेऽपि क्रियानिष्पद्यते तत् किमपेक्षः कारकाणां मध्ये एकस्यातिशयः योगः स्यात् । उच्यते । दात्रादेः

**विषयभेदादिति ॥ (वे)**

**सावकाशत्वे (वे)**

इत्युक्तिरभ्युपगम्यवादेन। न हि तमाभावे करणत्वविनिर्मुक्तः संज्ञान्तरविषयोऽस्ति। वस्तुतो भाष्ये

**परत्वाच्च (भा)**

इत्यस्य उत्सृष्टत्वाच्च इत्यर्थकस्य व्याख्या

---

इति ॥ विवक्ष्यते इत्यनेन विवक्षैव व्याकरणेऽङ्गं न बाह्यवस्तुसत्तेत्युक्तम्। अत एव दात्राद्यनादरेण बलस्य तत्त्वविवक्षायां बलेन लुनाति इत्यादि भवति तदाह "वस्तुत" इति। इदमेव वस्तुकरणमिति न नियमः निश्चिताधिकरणत्वापि स्थाली तनुतरकपालत्वात् शीघ्रतरपाकसाधनत्वेनानुभवति

---

अपवादत्वाद् बाधिका भविष्यन्ति पराः परत्वाच्चानवकाशत्वाच्च। इह तर्हि धनुषा विध्यति अपाययुक्तत्वाच्चापादानसंज्ञा ( १ । ४ । २४ ) साधक-

---

तरतीति लभ्यते। न त्वनिष्टविषयपरिहारेणेष्टविषये तस्याः प्रवृत्तिर्लभ्या। परत्वादनवकाशत्वाच्चेति। भा। विषयभेदापेक्षो हेतुद्वयोपन्यासः। साव-काशत्वे सति परत्वं हेतुरन्यत्र निरवकाशत्वम् ॥ इह तर्हीति। भा। अत्र

---

इति ॥ काष्ठैः पचति। विवक्ष्यत इत्यनेन स्थाल्यादीनामपि वैवक्षिकं करणत्वमस्तीत्युक्तम्। आह च

---

छेद्यमध्यानुप्रवेशो व्यापारः। काष्ठादेः पाके प्रज्वलनजनितोष्णस्पर्शानुप्रवेशः। तदनन्तरमेव क्रियासिद्धिः। नैव कारकान्तरेष्वनुप्रवेशस्तद्व्यापारानन्तरं वा क्रियानिष्पत्तिः सम्भवति। अतः

"क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम्"॥

अनवकाशत्वाच्चेति ॥ (भा)

ननु संज्ञाद्वयप्रसङ्गे परत्वात्करणत्वं सिध्यतीत्यत आह

अचेति ॥ (कै)

अपादानादन्यचेति । (कै)

काष्ठैः पचतीत्यादौ । उदकदाने अभिरूपस्यानियामकत्वादाह

---

वैवक्षिकं करणत्वमित्यर्थः । प्रकर्षस्य कर्तृपराधीनस्यापि न करणान्तरापेक्षः किन्तु कारकान्तरापेक्ष एव । कारकसामान्यवाचिनः साधकशब्दादुत्पद्यमानेन तमपा तत एव प्रकर्षबोधनात् । अत एव अश्वेन यथा दीपिकया व्रजतीति भवति । करणं तृतीयार्थः । प्रकृत्यर्थस्य तत्राभेदेनान्वयः तस्य च

---

साध्ये करणसंज्ञा प्राप्नोति । तमग्रहणे पुनः क्रियमाणे न दोषो भवति ॥ एवं तर्हि लोकत एतत् सिद्धम् । तद्यथा । लोकेऽभिरूपायोदकमानेयमभिरूपाय कन्या देयेति न चानभिरूपे प्रवृत्तिरस्ति तत्राभिरूपतमायेति गम्यते । एवमिहापि साधकं करणमित्युच्यते । सर्वाणि च कारकाणि

---

संज्ञाद्वयप्रसङ्गे निरवकाशत्वादपादानसंज्ञैव स्यात् । करणसंज्ञा ह्यपादानादन्यत्र सावकाशा । तमग्रहणे तु सति विविक्तविषयत्वाभावादुभयोर्धनुषा विध्यतीत्यत्र परत्वात् करणसंज्ञा सिध्यतीति ॥ उदकमानेयमिति ।

---

"वस्तुतस्तदनिर्देश्यं न हि वस्तुव्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः" ॥

---

विवक्ष्यते इत्यनेन एतद् दर्शयति देशकालावस्थादिवशेन यस्य क्रियाप्रत्युपयोगातिशयेन व्यापारः प्रकृत्यादीदं विवक्ष्यते तदा तस्य करणत्वं भवतीति । यथा स्थाल्यधिकरणत्वेन प्रसिद्धा तस्या मपि तनुतरकपालतया प्रकर्षविवक्षायां करणत्वं भवति स्थाल्या पच्यत इति । उक्तं च

विषयभेदेति ॥ (कै)

सावकाशत्वे (कै)

इत्युक्तिरभ्युपगम्यवादेन । न हि तमाभावे करणत्वविनिर्मुक्तः संज्ञान्तरविषयोऽस्ति । वस्तुतो भाष्ये

परत्वाच्च (भा)

इत्यस्य उत्कृष्टत्वाच्च इत्यर्थकस्य व्याख्या

---

इति ॥ विवक्ष्यते इत्यनेन विवक्षैव व्याकरणेऽङ्गं न बाह्यवस्तुसत्तेत्युक्तम् । अत एव दात्राद्यनादरेण बलस्य तत्त्वविवक्षायां बलेन लुनाति इत्यादि भवति तदाह "वस्तुत" इति । इदमेव वस्तुकरणमिति न नियमः निश्चिताधिकरणत्वापि स्थाली तनुतरकपालत्वात् शीघ्रतरपाकसाधनत्वेनानुभवति

---

अपवादत्वाद् बाधिका भविष्यन्ति पराः परत्वाच्चानवकाशत्वाच्च ॥ इह तर्हि धनुषा विध्यति अपाययुक्तत्वादपादानसंज्ञा (१ । ४ । २४) साधक-

---

हरतीति लभ्यते । न त्वनिष्टविषयपरिहारेणेष्टविषये तस्याः प्रवृत्तिर्लभ्या । परत्वादनवकाशत्वाच्चेति । भा । विषयभेदापेक्षो हेतुद्वयोपन्यासः । सावकाशत्वे सति परत्वं हेतुरन्यत्र निरवकाशत्वम् ॥ इह तर्हीति । भा । अत्र

---

इति ॥ काष्ठैः पचति । विवक्ष्यत इत्यनेन स्थाल्यादीनामपि वैवक्षिकं करणत्वमस्तीत्युक्तम् । आह च

---

छेद्यमध्यानुप्रवेशो व्यापारः । काष्ठादेः पाके प्रज्वलनजनितोष्णस्पर्शानुप्रवेशः । तदनन्तरमेव क्रियासिद्धिः । नैव कारकान्तरेष्वनुप्रवेशस्तद्व्यापारानन्तरं वा क्रियानिष्पत्तिः सम्भवति । अतः

"क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम्" ॥

अनवकाशत्वाच्चेति ॥ (भा)

ननु संज्ञाद्वयप्रसङ्गे परत्वात्करणत्वं सिध्यतीत्यत आह

अन्यथेति ॥ (कै)

अपादानादन्यचेति । (कै)

काष्ठैः पचतीत्यादौ । उदकदाने आभिरूप्यस्यानियामकत्वादाह

---

वधिकं करणत्वमित्यर्थः । प्रकर्षश्च कर्तृपराधीनस्यापि न करणान्तरापेक्षः
न्तु कारकान्तरापेक्ष एव । कारकसामान्यवाचिनः साधकशब्दादुत्पद्य-
न तमपा तत एव प्रकर्षबोधनात् । अत एव अश्वेन यथा दीपिकया
ीति भवति । करणं तृतीयार्थः । प्रकृत्यर्थस्य तत्राभेदेनान्वयः तस्य च

---

करणसंज्ञा प्राप्नोति । तमब्ग्रहणे पुनः क्रियमाणे न दोषो भवति
तर्हि लोकत एतत् सिद्धम् । तद्यथा । लोकेऽभिरूपायोदकमा
रूपाय कन्या देयेति न चानभिरूपे प्रवृत्तिरस्ति तत्राभिरूपतमाये
े । एवमिहापि साधकं करणमित्युच्यते । सर्वाणि च कारका

---

द्वयप्रसङ्गे निरवकाशत्वादपादानसंज्ञैव स्यात् । करणसंज्ञा ह्य
दन्यत्र सावकाशा । तमब्ग्रहणे तु सति विविक्तविषयत्वाभावादुभ
ा विध्यतीत्यत्र परत्वात् करणसंज्ञा सिध्यतीति ॥ उदकमानेयमिति

---

"वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः" ॥

---

विवक्ष्यते इत्यनेन एतद् दर्शयति देशकालावस्थादिविशेषेण यस्य क्रियां
योगातिशयेन व्यापारः प्रकृत्यादौ विवक्ष्यते तदा तस्य करणत्वं
ीति । यथा स्थाल्यधिकरणत्वेन प्रसिद्धा तस्या मपि तनुतरकपालतया
विवक्षायां करणत्वं भवति स्थाल्या पच्यत इति । उक्तं च

कन्यादानार्थमिति । (कै)

इष्टं कन्यासुखसन्तानादि ॥ अदृष्टम् परलोकः ॥

न चासाधके इति । (भा)

संज्ञाया इति शेषः ॥

---

खनिष्ठव्यापाराव्यवहितोत्तरोत्पत्तिकालसम्बन्धेन धात्वर्थेऽन्वय इत्येके । करणवाचीयो वध इति वाणकरणक इति वार्थ इति तत्वम् । अत्र बहवः । करणस्य च व्यापारे एवान्वयो न फलांशे शब्दशक्तिस्वभावात् । अत एवोद्भिदा यजेतेत्यादौ मत्वर्थलक्षणया भिया नामधेयत्वं सिद्धान्तितम् । अन्यथा व्यापारं प्रति करणत्वेनान्विते धात्वर्थफलांशे करणत्वेनान्वयोपपत्तौ लक्षणाया अप्रसङ्ग एव । अत एव सोमेन यजेत इत्यादौ छान्दसी मत्वर्थलक्षणेति मीमांसकाः । व्यापारे तदन्वये तु फलस्य करणत्वेनान्वयात् ।

---

साधकानि न चासाधके प्रवृत्तिरस्ति । यत्र साधकतममिति विज्ञास्यते ॥ एवं तर्हि सिद्धे सति यत्तमग्रहणं करोति तज्ज्ञापयत्याचार्यः कारक-

---

भा.। कन्यादानार्थम् ॥ न चानभिरूप इति । भा । दृष्टादृष्टप्रयोजनत्वात् कन्यादानस्येति भावः ॥ तरतमयोगो नास्तीति । भा । कथं पुनः केवलयोः

---

ननु कारकाधिकारादेव सिद्धे साधकत्वे पुनः श्रुतिः प्रकर्षार्थास्तु किं तमपा । सत्यम् । अस्मिन् प्रकरणे सामर्थ्यगम्यप्रकर्षो नाश्रीयत इति

---

"वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।

स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः" ॥

इति ॥ न चैवं कर्तुरपि करणविवक्षा प्रसङ्गः । भिन्न जातीयत्वात् । सकल-

लक्ष्यते इति। (कै)

अत एव ततः स्वार्थे ष्यञि तारतम्यमित्यतिशये सिध्यति। तरतमेत्यतिशयार्थमव्ययमित्यन्ये। एवमेवातिशयार्थकं तयामित्यव्ययं बोध्यम् ॥ उच्चारितस्यैव प्रत्यायकत्वात् तत्प्रतीतानुकार्येणातिशय-प्रतीतिरिति चिन्त्यम् ॥ नन्वत्र प्रकरणे तरतमयोगाभावे ईप्सित-मात्रस्य कर्मत्वं प्राप्नोतीत्यत आह

---

उत्पत्तिशिष्टकरणावरुद्धे करणान्तरस्यान्वयायोग्यतया सावकाशकेति वदन्ति। फलेऽप्यन्वये युगपत् फलांशस्य भावना निरूपितं करणत्वं स्वकरणनिरूपितं साध्यत्वं चेति वैरूप्यं स्याद् इति सावकाशकेत्यन्ये॥

प्रकृत्या चारुरित्यादौ "प्रकृत्यादिभ्य उपसंख्यानम्" (वा) इति

---

संज्ञायां तरतमयोगो न भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। अपा-दानमाचार्यः किं न्याय्यं मन्यते यत्र संप्राप्य निवृत्तिः। तेनैव स्यात्

---

प्रत्यययोः प्रयोगः। नैष दोषः। प्रकृतानुकरणत्वात्। तत्रानुकरणाभ्या-मनुकार्यप्रत्ययो प्रतीयेते ताभ्यामपि साहचर्यात्तदर्थो लक्ष्यते। तत्र तमब्ग्रुतिस्तज्ज्ञापयति प्रकर्षप्रत्ययग्रहणमन्तरेणेह प्रकरणे सामर्थ्यगम्य

---

ज्ञापयितुं तमप्। तेन गङ्गायां घोष इति सिद्धम्। यदा च तीरधर्म आधारत्वं प्रवाहे उपचर्यते तदेदं प्रयोजनम्। यदा तु गङ्गा शब्द एव तीरे

---

साधनविनियोगकारी स्वतन्त्रो। न च शतधनो निष्कधनेन सह स्पर्धते। कथं तर्ह्यनेन दीपिकया रथेन सञ्चरत इति बहूनां करणत्वं यावता तेष्वपि यदा यन्नोपकारकं तदेवकरणं युक्तम्। उच्यते। कारकान्तरापेक्षः करण-

तच्च तमेति ॥ (कै)

बुद्धिकल्पित इति । (कै)

अपादानमिति महासंज्ञयैवापाये ध्रुवे लब्धे पुनस्तद्ग्रहणसामर्थ्यात् प्रकर्षविवक्षायामत्र न स्यादिति भावः ॥

सामीप्यमात्राश्रयेणेति । (कै)

---

तृतीया । सा च सर्वविभक्त्यपवाद इति भाष्ये स्पष्टम् ॥ प्रकृतिर्यावदाश्रयभावी धर्मविशेषः । तेन तत्सम्बन्धिचात्वत्ववानिति बोधः । प्रायेण याज्ञिक इत्यत्र प्रायशब्दो बह्वर्थः । बहुव्याचारादिः । बह्वाचारव्याप्य याज्ञिकत्ववानिति बोधः । यद्वा । प्रायशब्दः सम्भावनार्थः । सम्भावना विषय-

---

ग्रामादागच्छति नगरादागच्छतीति । सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इत्यत्र न स्यात् । कारकसंज्ञायां तरतमयोगो न भवतीत्यत्रापि

---

प्रकर्षो नाश्रीयते । सांकाश्यकेभ्य इति । भा । बुद्धिकल्पितोऽत्रापायो न तु मुख्यः ॥ यत्र कृत्स्न इति । भा । सर्वैरवयवैः सह यत्रावयवो व्याप्तः इत्यर्थः ॥ गङ्गायामिति । भा । गोभिर्गङ्गाया व्याप्त्यभावान्न स्यादधिकरणसंज्ञा ।

---

वर्तते तदा न प्रयोजनम् । तत्राद्ये विभक्तिर्न लाक्षणिकी । सुब्विभक्ती न लक्षयेति तु "येन विधिः" ·( १ । १ । ७२ ) इति सूत्र एव

---

स्यातिशयो न लक्ष्यायां तेन सर्वेषां क्रियानिष्पत्तौ संनिपत्योपकारकत्वात् सिद्धं करणत्वम् । तमप् ग्रहणं किमिति । कारकाधिकारात् सिद्धे साधकत्वगुणः साधकश्रुतिः प्रकर्षार्थी भविष्यतीति प्रश्नः । लक्ष्यायां लोक

तेनापीत्यर्थः । अपिनैकदेशप्रकल्पिताश्रयेणेत्यस्य संग्रहः ॥

प्रकल्पितेति । (कै)

सम्पूर्णप्रवाहे एकदेशधर्मस्य तीरधर्मस्य वाऽऽधारत्वस्योपचार इति भावः ॥ तादृशमाधारत्वमपि सप्तम्याः प्रकृत्यर्थ इति बोध्यम् ॥

स्थाल्या पच्यत इति । (कै)

प्रतनुतरकपालतयाचातिशयविवक्षा बोध्या ॥

---

याज्ञिकत्ववानिति बोधः । प्रायेणात्र याज्ञिका इत्यादौ बहवो याज्ञिका इति बोधः । "नाम्ना सुतीक्ष्णः" इत्यत्र नाम ज्ञाप्य तीक्ष्णत्ववान् इति बोधः । एवं "चरितेन दान्तः" इत्यादौ । "सुरथो नाम राजा" इत्यादौ नामेति प्रसिद्धौ सुरथ इति प्रसिद्धो राजेत्यर्थः । यद्वा नामभूतसुरथ-

---

सिद्धं भवति ॥ तथाधारमाचार्यः किं न्याय्यं मन्यते यत्र कृत्स्न आधारात्मा व्याप्तो भवति ॥ तेनेहैव स्यात् तिलेषु तैलम् दध्नि सर्पिरिति । गङ्गायां

---

अस्माज्ज्ञापकात् सामीप्यमात्राश्रयेण प्रकल्पिताधारनिबन्धना सा भवति । अथ सामग्रीसाध्यायां क्रियायां कोऽतिशयः करणस्येति चेत् यद्व्यापारा-नन्तरं क्रियाप्रसिद्धिः तस्य च यदातिशयविवक्षा तदा तस्य करणत्वम् ।

---

निराकृतम् । द्वितीये तु प्रकृतिवाच्यवाचिकौ । ननु उभयं मुख्यमस्तु परम्परा सम्बन्धस्तु संसर्गः । नैवम् । कारकविभक्त्यर्थानां प्रकृत्यर्थे साक्षात्

---

इति । अस्ति तमबग्रहणे आधारो नाम यत्राधारात्मा व्याप्तो भवत्या-धेयेन । तेन इहैव स्यात् तिलेषु तैलं पयसि सर्पिरिति । गङ्गायां घोष इत्यत्र न तमप् ग्रहणं तु ज्ञापयति इह प्रकरणे सामर्थ्यमन्यप्रकर्षो सामी-

अनेन यथा इत्यादिष्वपि प्रत्यासन्नस्य कस्य चिदेव करणत्वं स्यादिति भावः ॥

## संनिपत्येति । (कै)

खले कपोतन्यायेन सर्वेषां साक्षादुपकारकत्वविवक्षणादित्यर्थः ॥

---

शब्दाभिन्नो राजेति बोधः । "नाम्ना चन्द्रकला" इत्यादौ नामभूतचन्द्रकला शब्दाभिन्न इत्यर्थः । एवमवच्छेद्यत्वादीनां सम्बन्धत्वविवक्षायां पटत्वेन जनत्वं प्रकारत्वमभाव इत्यादि प्रकृत्यादित्वात् साधु । अत्र च सर्वत्र कथञ्चित् करणत्वहेतुत्वान्यतरारोपेण तृतीयेति भाष्यसंमतम् ॥

---

गावः । कूपे गर्गकूलमित्यत्र न स्यात् । कारकसंज्ञायां तरतमयोगो न भवतीत्यत्रापि सिद्धं भवति ॥

---

यथा स्थाल्या पच्यत इति । कारकान्तरापेक्षस्य करणस्यातिशयो न तु खकक्षायामित्यनेन दीपिकया यथा व्रजतीति सर्वेषां क्रियानिष्पत्तौ संनिपत्योपकारकत्वात् करणत्वं सिद्धम् ॥

---

सम्बन्धेन विशेष्यतायाः व्युत्पन्नत्वात् । अपादानप्रकरणोक्तानि च बहून्युदाहरणानि तमप् ग्रहणस्य प्रयोजनानीति बोध्यम् ॥

---

वर्तते । तेनेष्टापि भवति । देशधर्मो घोषं प्रति आधारभावः घोषस्युपपद्यते तदेदं तमं ग्रहणस्य प्रयोजनं यदा तु गङ्गा शब्दतीरे वर्तते तदा न प्रयोजनम् । आधेयेन व्याप्तिसम्भवात् मुख्य एवाधारभाव इति ॥

# उपान्वध्याङ् वसः । १ । ४ । ४८ ॥

ननूपपूर्वो वसिरत्यर्थेऽप्रसिद्ध इत्यत आह

**अर्थशब्द इति ।** (कै)

अशिश्च तदर्थपर इत्यपि बोध्यम् । अश्यर्थनिवृत्तिवाचकस्य वसेरित्यक्षरार्थः ॥

---

उपान्वध्याङ्वसः । १ । ४ । ४८ ॥ उभयतः कृष्णं गोपाः । कृष्णसम्बन्धि पार्श्वद्वयसम्बन्धिन्य इति बोधः । धिक् कृष्णाभक्तम् कृष्णाभक्तसम्बन्धिनी निन्दा इत्यर्थः । धिगर्थो निन्दा । उपर्युपरि अधोऽधः अध्यधि वा लोकं हरिः । द्वित्वोक्तोपर्यादेः समीपोर्ध्वभागसमीपाधस्तनभाग-

---

उपान्वध्याङ्वसः । १ । ४ । ४८ ॥ वसेरश्यर्थस्य प्रतिषेधः । वा ।

---

उपान्वध्याङ्वसः । १ । ४ । ४८ ॥ वसेरश्यर्थस्येति । भा । अर्थशब्दो निवृत्तिवाची व्यधिकरणे षष्ठ्यौ । अश्यर्थस्य वाचको यो वसिस्तस्येत्यर्थः । अथवा प्रौढोऽर्थः अश्यर्थः न अश्यर्थोऽनश्यर्थः । तस्य अनशनार्थस्येत्यर्थः । स्थाने हि

---

उपान्वध्याङ्वसः । १ । ४ । ४८ ॥ एतत् पूर्वस्य वसतेराधारः कर्म स्यात् । उपवसति अनुवसति अधिवसत्यावसति वा ग्रामं सेना ॥

---

उपान्वध्याङ् वसः । १ । ४ । ४८ ॥ "वसतेरश्यर्थस्येति" । अर्थशब्दो निवृत्तिवचनः । व्यधिकरणे षष्ठ्यौ । अश्यर्थस्य यो वाचकस्तस्येत्यर्थः । भोजननिवृत्तिवाचिन इति यावत् । यद्वा प्रौढोऽर्थः अश्यर्थः न अश्यर्थस्तस्य ।

व्यधिकरण इति । (कै)

उक्तेऽर्थे सामानाधिकरण्यासम्भवादिति भावः ॥

अभ्यर्थस्येति । (कै)

अभिनिवृत्तेरित्यर्थः ॥ सामानाधिकरण्याय

अथवेति । (कै)

अनयोरायव्याख्यैव युक्ता भाष्यस्वारस्यात् ॥ ननु कथं तदधिकरणं ग्रामोऽत आह

विशिष्टेति ॥ (कै)

---

समीपदेशवृत्तित्वानि आमेयार्थः सामीप्यरूपः सम्बन्धो द्वितीयार्थः । सामीप्यं न षष्ठ्यर्थः इति त्वन्वयि पदवाच्यं सामीप्यं न षष्ठ्यर्थ इत्येवं परम् । अत एव वृक्षस्य समीपमित्यादौ तत्र सम्बन्धे षष्ठी । लोकसमीपोर्ध्वभागवृत्ति-

---

वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः । ग्राम उपवसतीति ॥ स तर्हि वक्तव्यः ।

---

शीवर्वर्तते यथा जलाश्रय इति । तेन ग्रामे तिष्ठतीत्यत्रार्थे ग्राममुपवसतीति प्रयोगः । अस्थानार्थत्वे तु ग्राम उपवसतीति । नात्रेति भा । विशिष्टा-

---

वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः । वा । अर्थशब्दो निवृत्तिवचनः व्यधिकरणे षष्ठौ वाच्यवाचकभावः षष्ठ्यर्थः भोजननिवृत्तेर्वाचको यो वसिस्तस्य इत्यर्थः ।

---

अस्थानार्थस्येत्यर्थः ॥ स्थानेऽपि हि शीङ् वर्तते जलाशयमिति । तेन ग्रामे तिष्ठतीत्यर्थे ग्राममुपवसतीति भवति । अस्थानार्थत्वे तु ग्राम उपवसतीति । स तर्हि प्रतिषेधो वक्तव्यः । न वक्तव्यः । कथम् । नाप्नोपपूर्वस्य

## अन्तरङ्गत्वादिति। (कै)

ग्रामे वासाधिकरणत्वस्यैव प्रसिद्धत्वेन ग्रीष्मोपस्थितिकत्वरूपान्तरङ्गत्वादित्यर्थः॥

## प्रतीयमानेति। (कै)

एवमुपवासाधिकरणकालोऽपि प्रतीयमान एवेति बोध्यम्॥ ननु बोधकपदाभावात् कथं विशिष्टकालभुजिनिवृत्तिप्रतीतिरत आह

---

रित्यादिक्रमेण बोधः। अभितः परितः कृष्णं गोपाः। अनयोः समीपसर्वदेशावच्छेदेनेत्यर्थः। सामीप्यरूपः सम्बन्धो द्वितीयार्थः। अभित इत्याभिमुख्येऽपि। कृष्णसंमुखे इत्यर्थः। समयानिकषा वा ग्राम इत्यत्राप्येवम्।

---

न वक्तव्यः। नात्रोपपूर्वस्य वसेः ग्रामोऽधिकरणम्। कस्य तर्हि। अनुपसर्गस्य। ग्रामे वसंस्त्रिरात्रमुपवसतीति॥

---

धारावस्थितत्वेन निश्चिते देवदत्ते भोजननिवृत्तिं विशिष्टकालां प्रत्याययितुमिदं प्रयुज्यते ग्राम उपवसतीति तत्रान्तरङ्गत्वात् प्रतीयमानवसिक्रिया-

---

ग्रामे उपवसति। कथमुपोष्य रजनीमेकामिति। "कालाध्वनोः" इति

---

वसेः ग्रामोऽधिकरणं तर्हि अनुपसर्गस्य। ग्रामे वसन् त्रिरात्रमुपवसति। एतदुक्तं भवति। विशिष्टाधारावस्थितत्वेन निश्चिते देवदत्ते भोजननिवृत्तिविशिष्टकालं प्रतिपादयितुमिदं प्रयुज्यते ग्राम उपवसतीति। तत्रान्तरङ्ग-

उपवसनं त्विति । (कै)

एवकारेण नित्याकाङ्क्षा दर्शिता ॥ तदुक्तं भाष्ये

चिरात्रमिति । (भा)

आरम्भे तु अत्रापि द्वितीया न स्यादिति तात्पर्य्यम् ॥

अन्तरङ्ग इति । (कै)

आवश्यक इत्यर्थः ॥

वहिरङ्ग इति । (कै)

आकाङ्क्षाभावादनावश्यक इत्यर्थः । असम्बन्ध एवेति वक्तुं युक्तम् ॥

---

समीपे इत्यर्थके अधिकरणशक्तिप्रधाने । द्वितीयार्थः सामीप्यरूपः सम्बन्धः । ग्रामसमीपदेश इति बोधः । हा कष्टा भक्तमित्यत्र हाशब्दः शोके तत्सम्बन्धी शोक इत्यर्थः । बुभुक्षितं न प्रतिभातीत्यादौ बुभुक्षितसम्बन्धी यत् किं चिद्विषयप्रतिभाभाव इत्यर्थः । प्रतिभा झटितिस्फुर्त्तिः ॥

---

पेक्षो ग्रामस्याधिकरणभावः । उपवसनं तु स्वरूपेणैव कालमपेक्षत इति कालेनैवास्यान्तरङ्गः सम्बन्धः । ग्रामादिना तु वहिरङ्ग इत्यर्थः ॥

---

द्वितीयाविध्यति कथमेकादश्यां न भुञ्जीतेति । उपपदविभक्तेः कारकविभक्तिर्बलवतीति ॥

---

त्वात् प्रतीयमानवसिक्रियापेक्षो ग्रामस्याधिकरणभावः । उपवसनं तु स्वरूपेणैव कालमपेक्षत इति कालेनैवान्तरङ्गः सम्बन्धो ग्रामादिना तु वहिरङ्ग इत्युपयुक्तमपि त्रिरात्रादिकं कर्म भवति ॥

# कर्तुरीप्सिततमं कर्म । १ । ४ । ४९ ॥

असत्यपीति । (कै)

अव्याप्तिर्नास्तीति भावः ॥

विशेषेति । (कै)

अनवकाशत्वादित्यर्थः ॥

---

कर्तुरीप्सिततमं कर्म । १ । ४ । ४९ ॥ द्वितीयादयोऽपि द्विविधाः कारकविभक्तय उपपदविभक्तयश्च । कारकं क्रियाजनकत्वशक्तिः । भाष्ये करोति क्रियां निर्वर्तयतीति व्युत्पत्तिदर्शनात् । ब्राह्मणस्य पुत्रं पन्थानं एच्छतीत्यादौ ब्राह्मणस्य न कारकत्वं पुत्रेणान्यथा सिद्धा तत्वाभावात् ॥ इतिरप्याह

---

कर्तुरीप्सिततमं कर्म । १ । ४ । ४९ ॥ तमग्रहणं किमर्थम् ।

---

कर्तुरीप्सिततमं कर्म । १ । ४ । ४९ ॥ तमग्रहणमिति । भा । असत्यपि तमग्रहणे ग्रामं गच्छतीत्यादौ कर्मसंज्ञा सिध्यतीति ईप्सिततमस्यापीप्सितत्व-

---

कर्तुरीप्सिततमं कर्म । १ । ४ । ४९ ॥ कर्ता यदाप्तुमिच्छतितमात्मनत् कर्मसंज्ञं स्यात् । यद्व्यापाराश्रयत्वादसौ कर्ता तेनैव व्यापारेणाप्तुमिष्टमिति

---

कर्तुरीप्सिततमं कर्म । १ । ४ । ४९ ॥ कर्तुः क्रियया इत्यादि । कर्तुर्यदाप्तुमिष्टतममित्यन्वयः । कर्तुरिति चेप्सितापेक्षया "क्तस्य च वर्तमाने" ( २ । ३ । ६७ ) इति कर्तरि षष्ठी । ईप्सित इति । "मतिबुद्धि" ( ३ । २ । १८८ ) इत्यादिना वर्तमाने क्तः ॥ क्रिययेति । करणे तृतीया ।

**विषयविभागाज्ञानेति । (कै)**

अग्नावेव कर्मसंज्ञा माणवक एवापादानत्वमित्यपि स्यादिति भावः ॥

**तमग्रहणेत्विति । (कै)**

तद्यथा तथा "वारणार्थानाम्" इति सूत्रे उपपादितम् ॥ ननु लोकेऽपि तथा व्यवहारादिदृहैत्ययुक्तमत आह

---

"स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे ।
क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः"

इति ॥ द्रव्यगता क्रियाजनकता शक्तिरेव कारकं साधनमिति उच्यते । सिद्धस्य द्रव्यस्य स्वरूपतः क्रियाजनकत्वानुपपत्त्या शक्त्याविष्टस्यैव

---

कर्तुरीप्सितं कर्म इतीयत्युच्यमाने इहाग्नेर्माणवकं वारयतीति माणवकेऽपादानसंज्ञा प्रसज्येत । नैष दोषः । कर्मसंज्ञात्र बाधिका भविष्यति ।

---

सम्भवादिति प्रश्नः ॥ माणवक इति । भा । विशेषविहितत्वादपादानसंज्ञायाः । कर्मसंज्ञेति । भा । परत्वात् ॥ अग्नावपीति । भा । अग्निमाणवकयोरीप्सितत्वसम्भवात् । कर्मापादानसंज्ञाविषयविभागाज्ञानपरमेतन्न तु

---

सन्निधानाल्लभ्यते । तेन क्रियाफलप्राश्रितत्वं पर्य्यवस्यति । क्रिया हि फलेच्छापूर्वकेच्छाविषयः फलमेव निष्ठतमम् । तच्च धातुनोपात्तमिति तद्विशिष्टत्वेनेच्छाविषयोऽत्र संज्ञी । स च त्रिविधः । उक्तञ्च—

---

कर्त्ता हि नाम यः क्रियामनुतिष्ठति तेन कर्तुर्यदिष्टतममित्युक्ते तत् क्रियावेशादसौ कर्त्ता भवति तथा करणभूतयेति गम्यते । कर्त्रा यदाप्तुमिष्यते आत्मीयया क्रियया इत्यर्थः । ईप्सितशब्दोऽयमस्त्यभिप्रेते रूढः । ईप्सितोऽभिप्रेत इति । अस्ति क्रियाशब्दः । आप्तुव्याप्तौ सन् "आप्ज्ञप्यृधामीत्" ( ७ । ४ । ५५ ) आप्तुमिष्टमीप्सितमिति तत्र क्रियाशब्दस्येह ग्रहणमिति

लोकः शास्त्रं चेति ॥

नन्वोदनपाके कथं द्रव्यान्तरस्योत्पत्तिरत आह

ओदनशब्दस्येति ॥ (कै)

भाष्ये

यद्योदनः पच्येत (भा)

इत्यस्यौदनकर्मकः पाको यदि बुद्ध्येतेत्यर्थः ॥

---

तत्वं वाच्यमिति प्राप्ताप्राप्तविवेकेन शक्तिरेव साधनम्। तदुक्तम् "अनभिहित" सूत्रे भाष्ये "गुणाः साधनम्" इति। शक्तिरेवात्र पारतन्त्र्याद् गुणत्वेनोक्ता॥ तत्र कर्तृकर्मणोः स्वाश्रयसमवेतक्रियाजनकता। करणादीनामाश्रयान्तरसमवेतक्रियाजनकता। किंच द्रव्यस्य

---

अग्नावपि तर्हि बाधिका स्यात्। इह पुनस्तमग्रहणे क्रियमाणे तदुपपन्नं

---

निरवकाशाऽप्यपादानसंज्ञा सावकाशया कर्मसंज्ञया बाधितुं शक्यते। तमग्रहणे तु सति संज्ञयोर्विषयविभागलाभः॥ इहेति। भा। लोकं शास्त्रं च सामान्येन निर्दिश्यते। लोके प्रयुज्यमानत्वात् शास्त्रे चोदाक्रियमाणत्वात्।

---

"निर्वर्त्यञ्च विकार्यञ्च प्राप्यं चेति त्रिधामतम्।
तत्रेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम्॥
औदासीन्येन यत् प्राप्यं यच्च कर्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्"॥

---

दर्शितमाशुमिश्रतममिति। "कर्मणा" इति। अश्वस्य स हि भक्षणे कर्तृत्वे सत्यपि सम्प्रति बन्धनं प्रतिकर्मत्वेन विवक्षितत्वात्॥ अकर्तृत्वात् माषाणां कर्मसंज्ञा न भवति तथा सार्थाद् हीयते इत्यत्रापि हीयमानं सार्थो जहातीति वस्तु हत्तेन त्यागेन कर्तुरपि सार्थस्य सम्मत्यपादानत्वपेक्ष

द्रव्यान्तरमभिनिर्वर्त्तत (भा).

इत्यस्य च द्रव्यान्तराभिनिर्वृत्तिः प्रतीयेतेत्यर्थः ॥

विक्लेदनान्तरकरणादिति । (कै)

विक्लेदनान्तरप्रतीतिप्रसङ्गादित्यर्थः ॥ ननु गौणार्थेन प्रयोगे किं फलमत आह

---

कारकत्वे तस्यैकरूपत्वेन कार्य्यवैचित्र्यानुपपत्तिः । दृश्यते च । घटं पश्य । घटेन जलमाहर । घटे जलं निधेहि इत्यादौ कार्य्यवैचित्र्यम् । सर्वस्य च सर्वशक्त्याश्रयता इति कदाचित् कस्याश्चिद विवक्षया तत्त्वम् विचित्रानेककार्योत्पत्तिः । क्वचित् शक्त्याविष्टद्रव्यस्यापि साधनत्वेन व्यव-

---

भवति यदुक्तं वारणार्थेषु कर्मग्रहणानर्थक्यं कर्तुरीप्सिततमं कर्मेति वचनादिति । इहोच्यते ओदनं पचतीति यद्योदनः पच्येत द्रव्यान्तरमभिनिर्वर्त्तेत ।

---

द्रव्यान्तरमिति । भा । ओदनशब्दस्य तण्डुलविकारे प्रयुज्यमानत्वात् पचेश्च विक्लित्युपसर्जनविक्लेदनवचनत्वान्निर्वृत्तस्य ओदनस्य विक्लेदनान्तर करणात् ॥

---

तथा

"यदसज्जायते यद्वा जन्मना यत्प्रकाशते ।
तन्निर्वर्त्त्यं विकार्य्यन्तु कर्म द्वेधा व्यवस्थितम् ॥
प्रकृत्युच्छेदसम्भूतं किञ्चित्काष्ठादिभस्मवत् ।
किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादि विकारवत् ॥

---

विवक्षितत्वात् कर्मणि यगात्मने पदे न स्याताम् । अत्राहुः । कर्मकर्त्तर्यन यगात्मने पदे । कथं जहातिरयं गमनायां वर्त्तते देवदत्तं सार्थो जहाति अपगमयतीत्यर्थः । एवैव च सार्थस्यापगमना यदुत क्षुदुपघातादिना देवदत्तस्यापगमे तत् समर्थावस्थां यदा क्षुधादिना स्वयमेवापगच्छति तदा

विकारेति। (कै)

ओदनस्वरूपेत्यर्थः॥

विकारान्तरम्। (कै)

भर्जनादिरूपं विक्लित्तिपदेन च पाकफलमात्रमुच्यते॥ ननू-भयविधव्यवहारात् प्रयोगद्वयेनापि भाव्यमेवेति केन प्रयोगेण भाव्य-मित्यर्थकप्रश्नानुपपत्तिरत आह

---

हारः। प्रकृतिप्रकृतिमतोरभेदस्यापि सत्वात्। प्रकृत्या करतीत्यादौ प्रकृतेरपि द्रव्यायमाणतया प्रकृत्यन्तरयोगः अत एव विभक्त्यर्थार्थकेनाव्यये-नाव्ययीभावः संगच्छते। द्रव्यस्यैव साधनत्वे तु तस्य प्रकृत्यैवोक्तत्वात् अव्ययस्य प्रयोग एवनेति कथं तेन समासः स्यात्। यथौ कर्तरीत्यादेश्च कर्तृप्रकृत्याश्रये इत्यादि प्रकारेणार्थ इत्यलम्। सर्वेषां कारकाणां स्वस्वा-वान्तरक्रिया द्वारा प्रधानक्रियानिष्पादकत्वम्। अत एव तेषां भावना-

---

नैष दोषः। तादर्थ्यात्ताच्छब्द्यं भविष्यति। ओदनार्थास्तण्डुला ओदन इति।

---

ओदनार्था इति। भा। गौणार्थाश्रयेणैव सर्वलोकस्य प्रयोगदर्शनादिदमत्र न चोदनीयं मुख्यस्यैव त्वोदनस्य पुनर्विक्लित्तिकारणे कस्मादयं प्रयोगो न

---

क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते।
दर्शनादनुमानाद्वा तन्निर्वर्त्यमिति कथ्यते"॥

तत्र निर्वर्त्यं यथा। घटं करोतीति। घटो ह्यसन्नेव जायते वैशेषिकादि-

---

कर्मकर्तृत्वं तदायं प्रयोगः। ततश्च च्छीयत इति सार्थः। स्वयमेवापगच्छ-तीति। पुनः कुतो छीयते इत्यपेक्षायां सार्थेन सम्बन्ध इति। "तमव् ग्रहणं किम्" इति। ईप्सिततमस्यापि ईप्सितत्वसम्भवात् उदाहरणसिद्धिं मन्यते। पयसौदनं भुङ्क्ते इति। करणसंज्ञा तु दात्रेण लुनातीत्यादौ सावकाशा

प्रकृति (कै)

इत्यादि ॥

कर्मभावाघटनादिति । (कै)

न हि तत्र तण्डुला निष्पाद्यन्त इति भावः ॥ ननु फल-व्यापारावाद्याय सर्वस्यापि द्व्यर्थत्वं नापि तावतोक्तप्रयोगोपपत्तिरत आह

---

यामेवान्वयः । क्रियाजनकत्वावगतौ का सा क्रियेत्याकाङ्क्षोदयेन तत्रैवा-न्वयौचित्यात् । असंनिहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वे सति दातृ-ज्ञानपूर्वकालत्वेनैव जनकत्वं तावदेव दानक्रियानिष्पत्तेः । घटं स्मरति घटं करोतीत्यादौ बौद्धघटादेः पूर्वकालत्वात् स्मृत्यादिनिष्पादकत्व-मित्याद्यूह्यम् । क्रियान्वयित्वं कारकत्वमिति तु न । कारकाणां भावनान्वय

---

अथेह कथं भवितव्यं तण्डुलानोदनं पचतीत्याहोस्वित्तण्डुलानामोदनं पच-तीति । उभयथापि भवितव्यम् । कथम् । इह हि तण्डुलानोदनं पचतीति ।

---

भवतीति । विकारविशेषप्रतिपादनाय गौणार्थपरिग्रहः । तण्डुलान् पचती-त्युक्ते विकारान्तरमपि प्रतीयते ॥ अथेहेति । भा । उभयथा प्रयोगदर्शनात् प्रकृतिविकृत्योः साक्षादुपादानात् तादर्थ्यात् ताच्छब्द्यानुपपत्त्या विक्लेदन-

---

मते । साङ्ख्यादि सत्कार्यवादिमते तु सन्नेवाभिव्यज्यते इत्यस्ति विशेषलक्ष-णम् । सामान्यलक्षणं तु कृधातूपात्तोत्पत्त्याख्यफलशालित्वात् । एतेन करो-तिर्यत्नार्थक इति मतं प्रत्युक्तम् । यतत इति वदकर्मकतापत्तेः । न च

---

नहि दात्रं लवनेनेप्सितं तथायुक्तमित्यनेनापि न भवति । द्वेष्योदासीन-प्राप्त्योस्तत्र ग्रहणात् । तथाप्यत्र पयसो भुजिक्रियायां प्रकृष्टोपकारकत्व इष्टायाः प्रकर्षाभावः । यत्र तर्हि पय एवेप्सिततमं तत्रप्राप्नोति । तद्यथा ।

विक्लेदनेति ।

निर्वर्त्तनरूपद्वितीयार्थमादायेदृश्यार्थमिति भावः ॥

विक्लित्त्या निर्वर्त्तयतीति । (कै)

विक्लित्तिविशिष्टं निर्वर्त्तनं पचेरर्थः । वैशिष्ट्यं च कचित् सामानाधिकरण्येन कचित् करणत्वेन विक्लित्तिशब्देनाच विक्लेदन-मेवैवं च तण्डुलानां धात्वर्थफलाश्रयत्वाविवक्षणान्न द्वितीया इत्यर्थ । षष्ठी त्वोदनयोगे इति भावः ॥ नन्वेवं विक्लित्तेः सम्बन्ध्याकाङ्क्षा ऽनिवृत्तेत्यत आह

---

इत्यस्य क्रियान्वयिनां क्रियान्वय इत्यर्थापत्त्या असंगत्यापत्तेः । अधिक-रणस्य कारकत्वेन क्रियान्वयइत्यादिभवदीयव्यवहारासंगत्यापत्तेश्च । कश्चित्तु प्रत्यक्षादिनाऽर्थंज्ञात्वा परंपतिसंस्कृतेन बोधनेच्छायां संस्कृतस्य

---

द्वयर्थः पचिस्तण्डुलान् पचन्नोदनं निर्वर्त्तयतीति । इहेदानीं तण्डुलानामोदनं पचतीति द्व्यर्थस्यैव पचिर्विकारयोगे षष्ठी तण्डुलविकारमोदनं निर्वर्त्तयतीति ।

---

वचने तु पचौ तण्डुलानामोदनं पचतीति प्रयोगायोगात् द्रव्यान्तरनिर्वृत्ति-प्रत्ययप्रसङ्गाच्च । निर्वर्त्तनवचने तु पचौ तण्डुलानां कर्मभावाघटनात्तण्डुला-नोदनं पचतीति प्रयोगाभावप्रसङ्गाच्च प्रश्नः॥ द्व्यर्थः पचिरिति । भा ।

---

नानातिवद् विषयत्वापादनपर्य्यन्तार्थाभ्युपगमेनापि निर्वाहः। लाघवेनोत्पादन-माच परत्वात् । कर्तृस्थक्रियतया .कर्मवद्भावासिद्धिप्रसङ्गाच्च । प्रकृतेः प्रकृतिभूतस्यात्मनः उच्छेदं सम्भूतं प्राप्तम् । तद्यथा। काष्ठं भस्म करोतीति ॥

---

कश्चित् कंचिदाह सिद्धं भुज्यतामिति । स आह प्रभूतं भुक्तमस्माभि-रिति । इतर आह पयो भविष्यतीति । अपरस्त्वरमाणा आह पयसा खलुरिति । इतर आह भविष्यतीति । अपरस्त्वरमाणा आह पयसा खलु भुञ्जीयेति । अत्र प्राप्ताप्राप्तविवेकेन पयस एवेप्सिततमत्वं न त्वोदनस्य

सा चेति ॥ (कै)

ननु पूर्वोक्तेऽर्थेऽपि मातुः स्मरतीतिवत् कर्मणः शेषत्वेन षष्ठी प्रयोगसिद्धेर्विकारयोगे षष्ठीति भाष्यमनुपपन्नमिति चेन्न । ओदनस्य सम्बन्ध्याकाङ्क्षत्वेन क्रियायाश्च तदनाकाङ्क्षत्वेन तथोक्ते षष्ठ्यन्तस्य साकाङ्क्षस्यान्वययोग्यनामसमभिव्याहारे तत्रैवान्वय इत्युत्सर्गतो व्युत्पत्तेश्चेति दिक् ॥

रीप्सिततमत्वमिति । (कै)

ईप्सितशब्दोऽभिप्रेतपरो रूढ इति पूर्वपक्ष्याशयः ॥ ननूद्देश्यत्वाद् इत्यादि ईप्सिततममत आह

---

व्याकरणत एव प्रकृतिप्रत्ययविभागद्वारा यस्य ज्ञानं तेन पूर्वं क्रियान्वयानवगमात्कारकत्वज्ञानाभावात् तदीयसंज्ञाकृतव्यवहारानुपपत्त्याभाष्योक्तमेव साधु इत्याह "यत्तु क्रियान्वितप्रत्ययार्थान्वयित्वं कारकत्वमिति" ।

---

इह कश्चित् कंचिदामन्त्रयते । सिद्धं भुज्यतामिति । स आमन्त्र्यमाण

---

विक्लेदनोपसर्जने निर्वर्त्तने पचिर्वर्त्तते । तण्डुलान् विक्लेदयन् ओदनं निर्वर्त्तयतीत्यर्थः ॥ तत्रोपसर्जनविक्लेदनक्रियापेक्षं तण्डुलानां कर्मत्वम् । प्रधानभूतक्रियापेक्षं त्वोदनस्य ॥ द्यर्थश्चेति । भा । तण्डुलानां सम्बन्धिनं विकार·

---

गुणान्तरोत्पत्त्या यथा । सुवर्णं कुण्डलं करोतीति । इह भस्मकुण्डलयोर्निर्वर्त्यत्वमेवेति बोध्यम् ॥ प्राप्यं तु आदित्यं पश्यतीति ॥ तथा युक्तमिति द्विविधम् । द्वेष्यमितरं च । अकथितं चेत्यपरम् । संज्ञान्तरप्रसक्तं चान्यत् ॥ "दिवः

---

अथाप्योदनमेवेप्सिततमं पयसस्तु संस्कारकत्वात् कारणत्वं न त्वस्य केवले गुणे आदरः । किं तर्हि तत् संस्कृते ओदने । न ह्यसौ केवलस्य पयसः पानेन संतुष्यतीति यदि तमर्थं ग्रहणं क्रियते । पयसौदनं भुङ्क्ते इत्यत्रैव

दधीति। (कै)

संस्कारकत्वेनैव तदुद्देश्यं न तु साक्षात् फलाश्रयत्वेनेत्यर्थः। अन्यथा दधिपयो मात्रभोजनेनापि कृती स्यात्॥ ननु गुणेष्वादरा-भावे दधिसत्ताज्ञानात् पूर्वमपि प्रवृत्तिः स्यादत आह

केवलेष्विति॥ (कै)

---

तन्न। पक्व ओदन इत्यादौ प्रत्ययार्थे कारकत्वकर्मत्वव्यवहाराभावापत्तेः। कारकाणां भावनान्वय इत्यस्य भङ्गापत्तेश्च। उक्तदोषाच्च। न च कारक-शब्दस्य कर्तृपर्यायत्वेन कारकं करणमित्यादि विरुद्धं कारकं कर्तेति पुनरुक्ता वेति वाच्यम्। हरिणैव समाधानात्। तथाहि—

"निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके।
व्यापारभेदापेक्षायां करणादित्वसम्भवः।

---

आह प्रभूतं भुक्तमस्माभिरिति। आमन्त्रयमाण आह दधि खलु भवि-ष्यति। पयः खलु भविष्यति। आमन्त्र्यमाण आह। दध्ना भुञ्जीय पयसा

---

विशेषमोदनं विक्लित्त्या निर्वर्त्तयतीत्यर्थः। सा च विक्लित्तिः सामर्थ्यात् तण्डुलानामेवेति विज्ञायते॥ इह कश्चिदिति। भा। अन्वयव्यतिरेकाभ्यां दधिपयसोरीप्सिततमत्वं न त्वोदनस्येति दर्शयति "तस्याप्योदन इति"। भा।

---

कर्म च" इत्यादि। तदित्थम्। सप्तविधं कर्मेति स्थितम्। इह प्राप्ये यद्यपि विषयताख्यः क्रियाकृतविशेषोऽस्त्येव। अन्यथा कर्मत्वानुपपत्तेः। तथापि प्रतिपत्तृव्यतिरिक्तपुरुषापेक्षया विशेषो न गम्यते इत्युक्तम्। विकार्ये तु

---

स्यात् पचत्योदनमित्यादौ न स्यात्। न ह्यीप्सिततमं युक्तम्। असति प्रतियोगिनि वस्तु यत्तुल्यजातीयं तदेव प्रतियोगितां भजते कारकं चात्र न किञ्चिदिष्टमीप्सितं पयसस्त्वीप्स्यमानत्वात् युज्यते प्रतियोगिता। नैष दोषः। अत्रापि क्रियापेक्षः प्रकर्षः। आदौ हि कर्त्ता मनसा क्रियाम-

**मृदुविशद** (भा)

दध्यप्रयोगानुपपत्तिरत आह

**कर्मधारय इति ॥** (कै)

**यदीति ।** (कै)

एवं च यथा तत्र तथागुणविशिष्ट ओदन एवेप्सित एवमिहापि

---

इति तेनोक्तम् । सर्वेषां स्वस्वव्यापारद्वारा स्वातन्त्र्येणैव क्रियाजन-कत्वात् कर्तृत्वेन कारकत्वम् । ततः कः केन किं पचतीति विवक्षायां स्वस्वव्यापारवशेन करणादित्वम् । तत्र साधनान्तरनियोगव्यापारः कर्ता तद्व्यापार एव सर्वत्र प्रधानधात्वर्थः ॥ कर्तुः क्रिययेप्सिततमव्यापारं कर्म । कारकान्तरसाध्यव्यापारं करणम् । प्रेरणानुमत्यादिव्यापारं

---

खलु भुञ्जीयेति । अत्र कर्मसंज्ञा प्राप्नोति तद्विशिष्टस्येप्सिततमं भवति ।

---

दधिपयसोस्तु संस्कारकत्वात्करणभावः ॥ न तु गुणेष्विति । भा । गुणेषु उपकारकेषु केवलेषु नास्वादयः किं तर्हि तत् संस्कृत ओदन इत्यर्थः ॥ मृदुविशद इति । भा । मृदुश्चासौ विशदश्चेति कर्मधारयः । यदि मार्दव-मात्रे आदरः स्यात् पङ्कमपि भक्षयेत् । विशदमात्रादरे सिकता अपि ॥

---

काष्ठादौ कथं धातूपात्तफलाश्रयता इत्यवधिष्यते । तत्रेदं तत्त्वम् । प्रकृति-विकृत्योरभेदविवक्षया निरूढ्या उत्पत्त्याश्रयता । यद्वा । काष्ठानि विकुर्वन् भस्मोत्पादयतीत्यर्थः तण्डुलान् विक्लेदयन् ओदनं निर्वर्तयतीतिवत् ।

---

भीष्मुति अतः फलार्थमिष्यमाणत्वात् ईप्सिता क्रिया फलं तु स्वरूपेणेष्य-माणमीप्सिततमं क्रियाया अपि कर्मत्वं संदर्शनादि विशेषान्तरास्पर्धया तत्र तर्हि फलाभावस्तत्र न स्यात् । अथ फलाभाव । विकार्ये काष्ठानि भस्मी करोति इति नहि काष्ठानि फलरूपाणि । मा भूवन् तानि स्व-

दध्यादिविशिष्ट ओदन ईप्सित इति भावः। अत्रेदं बोध्यम्। तस्या-प्योदन एवेत्याद्युत्तरं क्रियाशब्दोऽयमित्याशयेनैवोदन एव फलाश्र-यत्वविवक्षया न तु गुणे दध्यादौ तत्त्वाभावेऽनुरोधः फलाश्रयत्वविवक्षे-त्यपरार्थः। दृष्टान्तेऽसम्भवात्तदविवक्षादार्ष्टान्तिके ऐच्छिकीति भेदः। ईप्सिततमत्वं "करणार्थं" सूत्रोक्तरीत्या तद्व्यापारजन्यफलवत्त्वेने-च्छाविषयत्वरूपमेव भाष्यं सम्मतमन्यथा विशिष्टस्याभिप्रेतत्वे विशेषण-

---

सम्प्रदानम्। अवधिभावोपगमव्यापारमपादानम्। कर्त्रादिव्यवहितक्रि-याधारोऽधिकरणम्। स्वतन्त्रं प्रेरयन् हेतुः। तत्र सामान्यपूर्वकत्वाद्वि-शेषस्य कारकत्वमनुवृत्तमिति कारणं कारकमित्याद्युपपत्तिः। यथा पुत्र-जन्मनि पित्रोः कर्तृत्वेऽपि विवक्षयाऽयमस्यामियमस्मात् पुत्रं जन-

---

तस्याप्योदन एवेप्सिततमो न तु गुणेष्वस्यानुरोधः। तद्यथा। भुञ्जीयाह-मोदनं यदि मृदुविशदः स्यादिति। एवमिहापि दधिगुणमोदनं भुञ्जीय

---

ईप्सितस्येति। भा। ईप्सिततममेवेप्सितपदेन सामान्यशब्देन निर्दिष्टम्। विशेषेषु सामान्यस्य भावात्। यत्र यन्निर्वृत्तं क्रियायाऽनाधेयविकारं क्रियाया निष्पत्त्यर्थं केवलमुपादीयते तत् क्रियासम्बन्धात्। प्राप्यमपि नेप्सितमिति

---

एतच्च ह्यर्थः पचिरिति प्रक्रम्य भाष्ये व्युत्पादितम्। तत्र तण्डुलान् ओदनं पचतीति प्रयोगे तण्डुलनिष्ठविक्लित्तेरोदनोत्पत्त्यानुकूलो देवदत्तनिष्ठव्यापार इत्यर्थः। तण्डुलान् पचतीत्यत्र तु विक्लेदयतीत्यर्थः। ओदनं पचतीत्यत्र तु विक्लित्त्या निर्वर्तयतीत्यर्थः। उक्तञ्च —

---

पेया पलानि भस्मात्मना तु पलानि। प्राप्ते तर्हि न स्यात्। आदित्यं पश्य-ति। हिमवन्तं शृणोतीति न ह्यत्र क्रियया कश्चिदतिशयो जन्यते। अत्रा-प्यतिशयो जन्यते प्राकट्यं नाम। यो यं पश्यति शृणोति वा तस्यासौ प्रकटो भवति प्रतिपन्नाद्यतिरिक्तपुरुषापेक्षया तु विशेषो नास्तीत्युच्यते।

स्याभिप्रेतत्वात् समाधानानुपपत्तिः । पचकस्य प्रातिपदिकार्थत्वात् उभयविवक्षायां तु परत्वात् कर्मत्वमेव सत्यभिधाने "आकडार" सूत्रे "करणं पराणि" इत्यस्यासिञ्छिनत्तीति कर्तृसंज्ञाविषये एवोदाहरणदानात् तदभिधानसन्देह इति नास्य तद्दानमपा कर्मत्वकरणमुचितम् । नवीनग्रन्थास्तु चिन्त्या एव क्रियाग्रन्थत्वेऽपि सनेयमाणत्वस्यापि गर्भीकरणात् प्रवृत्ते । भाष्ये

ईप्सितस्य (भा)

इत्यादि॥ नन्वीप्सिततमस्य कर्मत्वादीप्सितस्येत्यनुवादो युक्तोऽत आह

---

यतीति व्यवहारः । अथैवमीदृशस्थलेऽपादानस्य कर्तृत्वेऽपि ग्रामादागच्छतीति प्रयोगस्तु न । अनभिधानात् । करणत्वाद्यवस्थायां कर्तृसंज्ञा तु न । कारकत्वादेव स्वातन्त्र्ये लब्धे "स्वतन्त्रः कर्ता" इति पुनः स्वतन्त्रग्रहणं स्वातन्त्र्यमेव यस्य तस्य कर्तृत्वार्थं न तु पारतन्त्र्ययुक्तस्वातन्त्र्ययुक्तस्य

---

पयो गुणमोदनं भुञ्जीय इति॥ ईप्सितस्य कर्मसंज्ञायां निर्वृत्तस्य कारकत्वे कर्मसंज्ञाप्रसङ्गः क्रियेप्सितत्वात् । वा । इप्सितस्य कर्मसंज्ञायां निर्वृत्तस्य

---

तस्य कर्मसंज्ञा न प्राप्नोति । यत्र हि कर्मार्थीक्रियानिष्पत्तिसंस्कारप्रतिपत्तिभिस्तत्र कर्मेप्सितम् । अन्यत्र तु क्रियैव प्रतीयमानसन्दर्शनादिक्रियापेक्षयेप्सितेति भावः॥ गुडं भक्षयतीति । भा । भक्षणाय गुडस्योपादानं

---

"सम्बन्धमात्रमुक्तस्य श्रुत्या धात्वर्थभावयोः ।
तदेकांशनिवेशे तु व्यापारोऽस्या न विद्यते"

---

यद्वा तमब्ग्रहणेन यत्र प्रकर्षेच्छा तदेव व्यावर्त्तते तेन पश्यत्यादावादित्यादीनामपि प्रतियोगिनो सत्त्वेनापकर्षाभावाद् भविष्यति । अत्र च लिङ्गं "शृङ्गाटकुक्कुटौ पश्यति" इति । कर्मेत्यनुवर्त्तमाने इति । अधि शीङ् स्थासाम्

ईप्सिततममेवेति। (कै)

तमस्यान्यार्थत्वमभिप्रेत्य तावत एवोल्लेख इत्यन्ये ॥ ननु निर्वर्त्त्यस्यापि काष्ठादेर्विकार्य्यस्य ईप्सिततमत्वं विकारवत्तयाऽस्त्येवेत्यत आह

अनाधेयविकारमिति ॥ (कै)

प्राप्यमपीति। (कै)

क्रियाजन्यसंयोगादिरूपफलाश्रयमपीत्यर्थः ॥

---

सा। कारकसंज्ञा तु वस्तु सत् स्वातन्त्र्यस्य स्थितिमात्रेण करणत्वादीनां विधानसामर्थ्यात् प्रवर्त्तते इत्यलम्। यद्वा प्रधानक्रियाजनकपूर्वोक्तस्वव्यापारे स्वातन्त्र्यसत्वात्। अकुर्वतः साधनत्वानुपपत्तेः। एवं तत्तद्व्यापारलभ्यकरणत्वादिमन्त एव कर्तृपारतन्त्र्येऽपि स्वस्वव्यापारे स्वातन्त्र्यसत्वात्। तद्द्वारा मुख्यक्रियायामपि स्वातन्त्र्या इति प्रधानक्रिया कर्तृत्वकोऽपीति

---

कारकत्वे कर्मसंज्ञा न प्राप्नोति। गुडं भक्षयतीति। किं कारणम्। क्रियेप्सितत्वात्। क्रिया तस्येप्सिता। न चोभयेप्सितत्वात् वा न वा। एव

---

न तु गुडाय भक्षणानुष्ठानम् ॥ न चेति। भा। गुडभक्षणं यस्येप्सितं तस्य गुडोभक्षणक्रिययेप्सितः। यस्मान्नासौ गुडस्य दर्शनस्पर्शनादिना कृती भवति नापि लोष्टादि भक्षणेनेति न भक्षणमात्रमीप्सितं नापि गुडमात्र-

---

इति। तस्माद् धातुत्वेन धातूपात्तां भावनां प्रति पचित्वेन पच्युपात्ता विक्लित्तिः कर्मतया करणतया वा यथायथं सम्बध्यत इति स्थितम्। इदं त्ववधेयम्। क्रियाया धातुना कर्त्तुरपि देवदत्तादि शब्देन लाभाद्यथा न द्वितीयार्थता तथेप्सततमत्वादेरपि प्रयोगोपाधिमात्रत्वात्। अधिश्रोङादिवत्।

---

इत्यतः। आधारनिवृत्त्यर्थमिति। प्रायं कर्मग्रहणमाधारेणसम्बन्ध इति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति भावः। आधारानुवृत्तौ कों दोषः तत्राह आधारस्यैव हि स्यादिति। क्वेत्याह गेहमित्यादि। अत्र तु न स्यात्तदाह ओदनं पचतीत्यादि। एतच्चेप्सिततमं कर्म त्रिविधं निर्वर्त्त्य

नेप्सितम् (कै)

नाभिप्रेतम् ॥

निष्पत्तिसंस्कारप्रतिपत्तीति । (कै)

"निष्पत्तिः" कटादेः ॥ "संस्कारः" प्रोक्षणादिना व्रीह्यादेः ॥ "प्रतिपत्तिः" दाहादिना हविरादेः ॥ ननु कर्तृक्रिययाप्तुमिष्यमाणं कर्मेत्यर्थस्तत्र कथं क्रिया स्वात्मनेप्सिता भवेत् एवं च क्रिया तस्येप्सिता इति भाष्यमनुपपन्नमत आह

---

तदुपपत्तिः । विभक्तिस्तु करणत्वादिनिमित्तैवानवकाशत्वात् । करणत्वादेरेवोद्भूतत्वात् । कर्तृवियोगेन तदीयव्यापारस्यैव धात्वर्थत्वेनोद्भूतत्वात्स्वातन्त्र्यविवक्षायां तु कर्तृत्वविभक्तिरेव सर्वत्र । क्वचित् सम्प्रदानापादानयोस्तु न वा अनभिधानात् इत्युक्तम् । यथा युद्धकर्तारोऽपि योद्धारो राजनियोगापेक्षणादस्वातन्त्र्या अपि नियोगोत्तरं पुनः स्वातन्त्र्या एव नियोगमात्रात्तु तन्निष्ठ जयादिभाग् राजा । तथा कर्तृनियोगोत्तरं यत् करणादिषु

---

दोषः । किं कारणम् । उभयेप्सितत्वात् । उभयं हि तस्येप्सितम् । आतश्चोभयम् । यस्य हि गुडभक्षणे बुद्धिः प्रसक्ता भवति नासौ लोष्टं भक्षयित्वा

---

मित्यर्थः । ये त्वेन इति । भा । ते हि यां कांचित् क्रियामनुष्ठाय कालमतिवाहयन्ति न तेषां द्रव्यविशेषे तात्पर्यम् । ततश्च नाहं कटं करिष्यामीत्यत्र कटस्य कर्मत्वानुपपत्त्या द्वितीया न प्राप्नोतीति कटकर्मिका क्रिया

---

एवं च तथा युक्तस्थल इवेहापि धातूपात्तफलाधारमात्रमर्थः । आधेयमेव वा । तथाभेदेन फलेऽन्वेति । अनन्यलभ्यशब्दार्थ इति न्यायात् । अन्यथा तथायुक्तत्वानीप्सितत्वयोरपि वाच्यतापत्तौ सकलतान्त्रिकविरोधाच्च । एवं च

---

विकार्यं प्राप्यम् इति । तथायुक्तमपि द्विविधं द्वेष्यमितरच्च । अकथितं चेत्यपरं संज्ञान्तरप्रसङ्गे चान्यद् "दिवः कर्म च" इत्यादिः । तदेवं सप्तविधं कर्म । उक्तं च—

